भगतसिंहं सिंहं वा वीराङ्गनां लक्ष्मीबाई इति नामधेयां महाराज्ञीम्। अनया तु अवलानां नाम सवला' इति साधितम्।

मूलतस्तु सकला विश्वभूमिः अखण्डरूपेण एका एव विद्यते तथापि भौगोलिक-दृष्ट्या इयं विभिन्नेषु भागेषु संविभक्ता वर्तते, यतः विविधानां भूखण्डानां विभिन्नं वातावरणं, विभिन्ना तेषां सांस्कृतिकी परम्परा, विभिन्नाभाषा, भूषा, विविधाश्च विचारधाराः अतः एकस्मिन् भूभागे जातो जनः भागान्तरेषु जातेभ्यः मानवेभ्यः स्वाभाविकरूपेण भिन्नः भवति। फलतः मानवः स्वकीयायां भाषायां, भूषायां, विचार-धारायां सौख्यम् अनुभवति। स अन्यं भूखण्डं गत्वापि स्वीयं न विस्मरति। अतः जनानां जन्मदेशः एव तेषां जन्मभूः। किं बहुना यत्र कस्यचिदपि ममतामयी माता, यत्र तस्य वत्सलः हितसाधकः जनकः, यत्र तस्य सुस्निग्धहृदयाः सहोदराः, रमणीया सुखदुःखभागिनीजाया, स्नेहमूर्तयः तस्य वत्साः, आत्मीयाः, सम्बन्धिनश्च सन्ति तत्रैव मानव हृदयस्य आध्यात्मिकं स्वरूपमपि वर्तते। अतः यादृशः स्वाभाविकः स्नेहः जन्म-भूमौ भवति नहि तादृशः अन्यस्मिन् कस्मिन् अपि स्थाने भवितुमर्हति। अतोहि उक्तं—जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

—:: ::—

## ४ संघे शक्तिः कलौ युगे

अयं तु परमसामान्यो नियमः यत् व्यस्तैः संसाधनैः यदसाध्यं भवति तदेव तैः समस्तैः सुसाध्यं जायते। यथा मन्दपवनान्दोलितैः परिलघुभिः तृणैः न शक्यते साध-यितुं पातयितुं वा किञ्चित् किन्तु तान्येव तृणानि यदा रज्जुरूपेण निबद्धानि भवन्ति तदा तैः प्रमत्ताः बलवन्तः गजा अपि आबद्धुं शक्यन्ते। अतः आधुनिके युगे यत् कार्यं समूहबलेन साध्यते तत् न एकेन केनापि कर्तुं शक्यते। अतः संघे शक्तिः कलौ युगे इति सत्यम्। कलौ इति कथनेन वर्तमानः समयः एव द्योत्यते।

पुरा यः कोऽपि जनः अपूर्वबलसम्पन्नः, विलक्षणसामर्थ्योपेतः, प्रभुतासम्पन्नः, वीरः साहसिको वा आसीत् स किमपि दुष्करं कर्तुमपारयत्। यथा—भारते महा-बलान्वितः भीमः, अद्वितीयः धनुर्धरः अर्जुनः, यूरोपीये देशे—परिश्रमशीलः हरक्यूलीसः, पराक्रमशाली सिकन्दरः, वीरः नैपोलियनः, साहसिकः हिटलरश्चासन् एषु सर्वैः निज-समये एकाकिभिः एव महान्ति दुष्कराणि कार्याणि विहितानि,

स्वकीयानि लक्ष्याणि संसाधितानि किन्तु साम्प्रतं सा स्थितिः तु सर्वथा गता । अस्मिन् कलिकाले संघटने शक्तिः समायाता । अद्यत्वे न वैदुष्यस्य मूल्यं, न व्यक्तिगत पराक्रमस्य, न बलस्य न साहसस्य, अद्य तु जनबाहुल्येन सर्वं सिद्धं भवति । अद्य स्थाने स्थाने संघाः संघटिताः, विविधाः समितयः संस्थापिताः, सामाजिके, धार्मिके, आर्थिके वा राजनीतिके क्षेत्रे सर्वत्र यत् किञ्चित् बहुमतैः निश्चीयते तदेव सम्पाद्यते, तदेव सत्यं, तदेव शिवं, तदेव सुन्दरम् । सर्वत्र समवायशक्तिः इष्टकारिणी । इदानीम् एकाकी महाबलिष्ठोऽपि दुर्बलः, अपूर्वशक्तिसम्पन्नोऽपि शक्तिहीनः, अस्त्रशस्त्रनिपुणोऽपि अनिपुणः, न कोऽपि संघानां विरोधे सति पारयति अघटितघटनां घटयितुम्, संघबलेनैव सर्वाणि कार्याणि साध्यानि विलोक्यन्ते ।

विविधेषु क्षेत्रेषु संघानां विविधानि रूपाणि वर्तन्ते । सामाजिकव्यवस्थासु संघटितानां जनानां प्राधान्यं प्राबल्यञ्च वर्तते । संघटिताः जनाः प्राचीनां सुदृढां परम्परां, वैवाहिकीं व्यवस्थां परित्यक्तुं समर्थाः । तेषां विरोधे न कस्यापि गतिः, न कस्यचित् सामर्थ्यं किमपि कर्तुं दृश्यते । संघटिताः जनाः नवनवाः परम्पराः प्रवर्तयन्ति नवान् उत्सवान् प्रचालयन्ति, अन्ये जनाः तान् सहर्षमनुगच्छन्ति । साम्प्रतं न जाने कियन्तः संघाः समुत्पन्नाः—यथा—छात्राणां संघः, शिक्षकाणां संघः, साहित्यिकानां संघः, कवीनां, लेखकानां, कर्मचारिणां संघः, ये जनानां नेतृत्वं कुर्वन्ति, स्वकीयानि कार्याणि सम्पादयन्ति । यदा कदा इमे संघाः कुमार्गगामिनः भवन्ति, कुचेष्टाः कुर्वन्ति, संघशक्तिः न सर्वदा सदुपयोगिनी भवति, न सर्वदा शुभं विदधाति, ये छात्राः गृहेभ्यः अध्ययनाय विश्वविद्यालयं गच्छन्ति, ये सौम्याः सुशीलाश्च सन्ति, तेऽपि संघीभूय दुःशीलाः जायन्ते । ये कर्मचारिणः निष्ठावन्तः, सदाचारिणः, प्रकृत्या सरलाः, तेऽपि संघबले निपत्य क्रूराः, कुटिलाः, दुर्धर्षाः जायन्ते । वस्तुतः संघशक्तिः मदयति जनान्, इयं अपहरति तेषां विवेकबुद्धिम्, अनया प्रताडिताः जनाः स्वार्थपराः जायन्ते । समुदितायां संघशक्तौ जनः मदान्धः भवति, न स शीलं पश्यति, न वैदग्ध्यं गणयति, न परिचयं रक्षति, नाचारं पालयति, न विशेषज्ञतां विचारयति । नायं अभिजनमीक्षते, न कुलमाद्रियते, न च सत्यमनुबुध्यते । अनया जनाः ग्रहैरिव गृह्यन्ते, मन्त्रैरिव आवेश्यन्ते, पिशाचैरिव ग्रस्यन्ते । छात्राः, कर्मचारिणः विशेषरूपेण दुर्व्यवहरन्ति ।

आर्थिकक्षेत्रेऽपि संघानां बाहुल्यं दरीदृश्यते । कोऽपि एकाकी जनः न किमपि कर्तुं पारयति । पुरा ये श्रमिकाः निष्ठावन्तः, श्रमशीलाः, सरलाश्चासन् त एव साम्प्रतं संघटनबलेन शक्तिशालिनः संजाताः । तेषु न केवलं कर्मकराः अपितु

अराजकतत्त्वानि समायान्ति । तेष्वेव राजनीतिक दलानि गुप्तरीत्या प्रविश्य कार्यस्थगनं, द्वन्द्वञ्च कारयन्ति, वस्तुतः राजनीतिधुरीणाः अपि तैः भीताः तेषां वन्दनं कुर्वन्ति, अधिकारिणोऽपि तेभ्यः बिभ्यति । प्रत्यहं आकाशवाणीतः श्रमिकाणां कल्याणाय विभिन्नाः योजनाः उद्घोष्यन्ते । फलतः देशस्य आर्थिकी स्थितिः शोचनीया जाता । आर्थिके क्षेत्रे सम्प्रति संपत्तौ वैयक्तिकः अधिकारः एव सिद्धान्तरूपेण न गण्यते । तत्र जन-समूहस्य संघस्थ राष्ट्रस्य वा अधिकारः स्वीक्रियते । अयमेव वर्तमानः समाजवादः, अयमेव संघशक्तेः परिणामः, अयमेव न्यायः लोकस्य, इदानीं व्यक्तिगतप्रयासेन न किमपि क्रियते, न च साफल्यम् लभ्यते । व्यक्तिस्तु इदानीं समाजस्य अंगीभूताव-तिष्ठते न च प्राधान्येन ।

राजनीतिकक्षेत्रे तु शासनप्रक्रिया एव परिवर्तिता । प्रायशः सर्वत्र शासनसूत्रं प्राजातान्त्रिकं, गतो महाराजानां कालः, गतः एकाधिपतीनां समयः, नष्टः व्यक्तिगत-शक्तिशालिनां जनानां स्वरः, इदानीं जनाः स्वयमेव शासकाः । अस्मिन् क्षेत्रेऽपि अनुदिनं नवीनाः संघाः निर्मीयन्ते, प्राचीनाश्च विशृंखलिताः जायन्ते । पुरा संघानां निर्माणं देशहिताय आसीत् किन्तु अद्य तेषां स्थापनं स्वार्थाय क्रियते । सन्निकटे अतीते आंग्ल-जनानां विरोधे संघाः निर्मिताः जाताः किन्तु बहिर्गतेषु आंग्लजनेषु जनाः स्वहितार्थं एषां निर्माणं कुर्वन्ति न तु राष्ट्रनिर्माणाय । इदानीं राष्ट्रनिर्माणे न कस्यापि रुचिः, केवलं राजनीतिकपटले व्याजोऽयं दृश्यते । साम्प्रतं सर्वत्र प्रजातंत्रं दृश्यते, दैवात् चेत् कुत्रापि राजत्वम् अस्ति तन्न निरंकुशम् । राजा तु केवलं नामधारकः, तत्र तस्य मन्त्रिपरिषद् कार्यं करोति अथवा संसदादयः कार्यं सम्पादयन्ति । संघानां शक्तिबलेन अयोग्याः जनाः अपि शासकाः भवन्ति, धनिकाः निर्वाचनेषु जयन्ति, किं बहुना संघ-शक्तिः न केवलं देशे, अपितु विश्वे संयुक्तराष्ट्रसंघरूपेण अवतिष्ठते । किमपि राष्ट्रं एकाकि नैव स्थातुं शक्नोति । अतो हि उच्यते संघे शक्तिः कलौ युगे ।

—: ::—

## ५ नास्ति उद्यमसमो बन्धुः

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

सत्यमेवाभिहितमिदम् । समीचीनेनोद्योगेनैव सकलं सिद्धिं गच्छति । विविध-संसाधनोपेते आधुनिके युगे इयमुक्तिः सविशेषं सार्थकताम् आवहति । वस्तुतः केवलं संकल्पैः, विकल्पैः, मनोरथैः न किमपि सिध्यति । संप्रति सुविस्तृतं भूमण्डलमिदं वैज्ञानिकप्रगत्या लघुत्वम् उपगतम् । महत्तराणि अन्तराणि संकुचितानि जातानि, सुदूरस्थानि स्थानानि आसन्नानि भूतानि, क्षणेनैव कस्मिन्नपि क्षेत्रे जायमाना घटना अन्यस्मिन् प्रदेशे सुविदिता जायते, क्षितिजलपावकगगनसमीराः सकलाः सर्वथा मानवाधीनाः । इदानीं प्रभुतासम्पन्नः प्रगतिशीलः मानवः शशिनः शिरसि स्वकीयं चरणं निवेशयति—केवलम् उद्यमेनैव ।

विविधानां समस्यानां समाधानं, समापततां दुःखानां निवारणं दुष्कराणां कार्याणां सम्पादनं, समागतानां विपत्तीनां अपाकरणञ्च दुरुहपर्वतरोहणम् इव उद्यमेनैव भवति न तु हस्ते हस्तं निधाय । अपरञ्च आपत्तिकाले बान्धवाः सुहृद् जनाश्च येन रूपेण कस्यचित् सहायकाः भवन्ति तेनैव, उद्यमरूपेणापि सहायकः अतो हि उक्तम **"नास्ति उद्यमसमो बन्धुः"** ये केऽपि जनाः उद्योगपरायणाः, कार्यनिरताः, ये गतिशीलाः त एव वैयक्तिके, आर्थिके, सामाजिके, राजनीतिके च क्षेत्रे साफल्यम् अवाप्नुवन्ति । ईश्वरोऽपि तेषामेव सहायतां करोति ये उद्योगशीलाः । यथोक्तम् आंग्लभाषायाम्—"God helps those who help themselves" उपनिषत्सु अपि उल्लिखितं वर्तते—**"नायम् आत्मा बलहीनेन लभ्यः"** अतो हि वीरभोग्या वसुन्धरा, इति तु अवितथम् एव ।

कलौ संघे शक्तिः प्रोच्यते, किन्तु उद्यमं विना संघटनं न सम्भाव्यते । उद्योगेन पराधीनं भारतं स्वतंत्रं जातम्, उद्योगेनैव अन्ये देशा अपि दासतायाः उन्मुक्ताः, अद्यापि अनेके देशाः स्वकीयायै स्वतंत्रतायै यत्नशीलाः दृश्यन्ते । उद्योगशीलाः कृषीवलाः उद्योगबलेन प्रचुराणि धान्यानि समुत्पादयन्ति, उद्योगेन सुभटाः सैनिकाः रणक्षेत्रे विजयश्रियं लभन्ते, क्रियाशीलाः नेतारः क्षणे क्षणे परिवर्तमानायां राजनीतौ सफलीभूताः भवन्ति । समुचितेन उद्यमेन असम्भवम् अपि सम्पादयितुं शक्यते ।

मानवास्तु स्वभावतया उद्यमशीलाः । श्रुतिरपि अस्माकम् एवम् उपदिशति । **"कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः"** तथापि लोके द्विविधाः जनाः विद्यन्ते—

भाग्यवादिनः, पुरुषार्थवादिनश्च । भाग्यवादिनां मते सर्वं दैवाधीनं भवति, दैवम् एव सर्वकार्यक्षमम्, तदेव सर्वाभीष्टं सिद्धिकरं, तदेव सर्वं कर्तुं, अकर्तुं, वान्यथा कर्तुं क्षमम् । यथोक्तं मनीषिभिः—"**भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्**" भाग्यवादिनां विचारोऽयं यत् कस्यचित् समृद्धस्य धनिकस्य गेहे समुत्पन्नः जनः नित्यं निश्चिंतः स्वपिति, स सर्वैः ईप्सितैः संसाधनैः सज्जः भवति, सर्वाणि भौतिकानि सुखानि लभते, किन्तु निर्धनस्य कुटीरे जायमानः अकिंचनः जनः जन्मनः आरभ्य सदैव दुःखानि जानाति, असह्यान् अपशब्दान् शृणोति, नान्नं, न वस्त्रं लभते, स परिश्रमं विधाय अपि अभीष्टं नैव अवाप्नोति । एतद् विपरीते पुरुषार्थवादिनाम् उद्घोषः अस्ति यत् पुरुषार्थं विना न किमपि लब्धुं शक्यते । तेषां मते चेत् कोऽपि अस्मिन् जन्मनि धनिकस्य गेहे समुत्पन्नः तत् पूर्वकृतकर्मणः फलम् एव । पूर्वकृत पुण्येनैव पुरुषार्थः भाग्यं सम्भवति ।

सत्यमिदम्—उद्योगहीनः जनः कियदपि धनं लभेत, उद्योगं बिना न तद् सुरक्षितं भवेत् । एवं कौटुम्बिकाः, परिजनाः, अन्ये सहयोगिनः उद्योगहीनस्य कियतीमपि सहायतां कुर्युः किन्तु सर्वा सहायता निष्फला भवति ।

इदानीं निखिले विश्वे सर्वे प्राणिनः गतिशीलाः, गतिहीनं जलमपि दूषितं भवति । चन्द्रः गतिमान्, गतिमान् सूर्यः, ग्रहतारकाः गतिमन्तः, नद्यः गतिमत्यः वाताः गतिमन्तः, सर्वं गतिशीलम्, गतिः एव प्राणाः, तत् कथन्न उद्योगः करणीयः, साम्प्रतं अस्माकं कृते उद्योगस्य महती आवश्यकता, अस्माकं राष्ट्रं विकासशीलं अतोऽस्य विकासाय उद्यमः परमोऽपेक्षितः, अनेकाः समस्याः राष्ट्रस्य पुरतः विद्यन्ते तासां समाधानं उद्यमेनैव सम्भवति । उद्यमशीलत्वं एको विशिष्टो गुणः, अयमेव स्पृहणीयः अयमेव समुन्नतिसाधकः । अयमेवमानवानां श्रेष्ठः बन्धुः ।

———

## ६. माघे सन्ति त्रयो गुणाः

"मेघे माघे गतं वयः", "नवसर्गगते माघे नव शब्दो न विद्यते",

"माघे सन्ति त्रयो गुणाः" इति सूक्तयः कवि शिरोमणेः माघस्य कविरूपेण प्रतिष्ठां प्रख्यापयितुं सर्वथा प्रभवन्ति । कीदृशी प्रसादगुणोपेता सरसा च तस्य पदावलिः, कीदृशी महती कमनीया तस्य कल्पना, कीदृशी भावानामुदात्तता, कीदृशं चालंकरणं तस्य काव्ये विलसति एतत्तु न तिरोहितं कस्यचित् । तस्य महाकवेः पाडित्यपूर्णे

महाकाव्ये पदे पदे पदलालित्यं समुल्लसति । अतः तस्य काव्यस्य विवेचनम् अपि माधुर्यसन्निवेशं दास्यति नात्र कापि विप्रतिपत्तिः ।

माघस्य काव्ये महाकवेः भारवेः व्यापकः प्रभावः सुस्पष्टः सुनिश्चितश्च दरीदृश्यते । विलक्षणं साम्यं तत्र वर्तते किराते शिशुपालवधे च । उभयोः काव्ययोः कथानकस्य स्रोतः महाभारतम्, उभयोः आरम्भः श्री शब्देन विहितः, उभयोः अवसानं लक्ष्मीशब्देन, उभयोः प्रथमे सर्गे संदेशवर्णनं, द्वितीये सर्गे च तस्य विषयविश्लेषणम् उभयोः पथप्रदर्शनं केनचित् ऋषिणा सम्पाद्यते, उभयोः काव्ये पर्वतवर्णनं दूतप्रेषणं, द्वन्द्वयुद्धात्पूर्वं सेनयोः संघर्षः, अनयोः साम्यं वक्तुमलम् । वस्तुतः माघेन अनेकेषु स्थलेषु भारवेः भावाः अपि गृहीताः । तथापि इयमुक्तिः नोपेक्षणीया—यत् "तावद् भा भारवेर्भाति यावद् माघस्य नोदयः" अतो हि माघस्य स्थानं वृहत्त्रय्याम् असंदिग्धम् एव । माघस्य काव्ये कलापक्षस्य प्राधान्यं विलोक्यते । अस्मिन् काव्ये यादृशी प्रौढिः, यादृशी प्रभावोत्पादकता, यादृशं लालित्यं न तत् सर्वं वर्तते अन्यत्र ।

माघः न केवलं कविरासीत् । तस्य विश्रुतिः पाण्डित्येन वैयाकरणत्वेन च अति प्रचुरा । वस्तुतः तस्य युगस्य एतादृशी परिकल्पना आसीत् यत् पाण्डित्यं विना कवित्वं व्यर्थमेव । इममेवाधारम् आदाय महाकविना भट्टिना स्वकीये काव्ये व्याकरणस्य सन्निवेशः विहितः । माघेन स्वकाव्ये न केवलं व्याकरणं, अपितु सांख्यं, योगः, राजनीतिः, न्यायः बौद्धदर्शनं, वेदः, काव्यशास्त्रं, पुराणं, संगीतं पशुपक्षिणां ज्ञानं च सम्यक्तरत्वेन प्रदर्शितम् । अतः यदि कालिदासः मूलतः मौलिकः कविः, भारविः राजनीतिपटुः, भट्टिश्च उद्भटवैयाकरणः, तदा माघः सर्वतन्त्रस्वतंत्रः, अप्रतिमः महाकविरासीत् । कस्यचित् समालोचकस्य एषा उक्तिरपि विवेचनीया—

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

अनया दृष्ट्या माघस्य काव्ये अनुपमाः उपमाः विलसन्ति, तत्र अर्थगाम्भीर्यं वर्तते, स्थले स्थले रमणीयः पदविन्यासो विद्यते । यद्यपि उपमाविषये कालिदासः कालिदासः एव, स न केनापि अतिशयितुं शक्यते किन्तु कालिदासादीनां काव्येषु केवलं एकैकः गुणः प्रकीर्त्यते, माघस्य काव्ये तु त्रयोऽपि गुणाः एकस्मिन् ग्रन्थे वर्तन्ते । माघस्य पदानां कीदृशं रमणीयत्वं, कीदृशं गाम्भीर्यं, कीदृश्यः उपमाः तत्र सन्ति एतदधोलिखितैः पदैः स्फुटं भविष्यति ।

१. रमणीयत्वम्

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपंकजम् ।
मृदुलतान्तलतान्तमलोकयत् ससुरभिं सुरभिं सुमनोभरैः ॥

शिशुपालवधम् ६/२

मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥

शिशुपालवधम् ६/२०

कीदृशं लालित्यपूर्णं स्वाभाविकं वर्णनमेतत् इति तु स्पष्टमेव ।

२. व्याकरणज्ञानम्

परितः प्रमिताक्षरापि सर्वं विषयं व्याप्तवती गता प्रतिष्ठाम् ।
न खलु प्रतिहन्यते कुतश्चित् परिभाषेव गरीयसी यदाज्ञा ॥

शिशुपालवधम् १६/८०

अस्मिन् श्लोके परिभाषायाः ज्ञानं आज्ञाव्याजेन प्रदत्तम् ।

३. राजनीतिविश्लेषणम्

स्वशक्त्युपचये केचित् परस्य व्यसनेऽपरे ।
यानमाहुस्तदासीनं त्वामुत्थापयति द्वयम् ॥

शिशुपालवधम् २/५७

शत्रुः कदा आक्रमणीयः इत्यस्मिन् श्लोके स्फुटं भवति ।

४. सामान्यनीतिः

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्य कारणं गुणलुब्धाः स्वयमेव सम्पदः ॥

सम्पदः कदा आयान्ति, कार्यं कथं करणीयम् एतत् सर्वम् अतिसारल्येन अत्र प्रदर्शितम् । इयमुक्तिः माघस्य अनुभवं प्रकटयति ।

५. सांख्यज्ञानम्

उदासितारं निगृहीतमानसैः गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृतेः पृथग् विदुः पुरातनं त्वां पुरुषं पुराविदः ॥

सांख्ये पुरुषः निर्विकल्पः, क्रियाहीनश्च उच्यते, १/३३
स कथं ज्ञेयः कैश्च ज्ञेयः इत्युक्त्वा श्रीकृष्णस्य महत्ताऽत्र प्रदर्शिता ।

६. उपमा

क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ताद्,
उपगतवति पाणिग्राहवद् दिग्वधूनाम् ।
द्रुततरमुपयाति स्रंसमानांशुकोऽसा-
वुपपतिनीचैः पश्चिमान्तेन चन्द्रः ॥

अस्मिन् श्लोके चन्द्रः उपपतित्वेन वर्णितः । स सूर्ये गते केन रूपेण उपपतित्वं भजते एतत् प्रदर्शितं किन्तु कालिदासस्य उपमासु यादृशः प्रवाहः वर्तते न तादृशः अत्र विद्यते ।

७. रसाभिव्यक्तिः

यां यां प्रियः प्रैक्षत कातराक्षीं,
सा सा ह्रिया नम्रमुखी बभूव ।
निःशंकमन्याः सममाहितेर्ष्यैः,
तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥

अपरश्च

विपुलेन सागरशयस्य कुक्षिणा,
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः,
स पुरस्त्रियैक तमैकया दृशा ॥

माघेन उत्प्रेक्षा रूपक निदर्शनादीनां विविधानामलंकाराणां प्रयोगः स्वकाव्ये स्वाभाविकरूपेण कृतः । अतः अयं महाभागः अलंकरणशैल्यां प्रधानः तिष्ठति । प्रायशः प्रतिपदं अलंकारसन्निवेशः वर्तते । अतोऽधिकम् एकस्मिन् पदे यदा कदा अनेके अलंकाराः समाविष्टाः । माघः भारविणा कालिदासेन च प्रभावितः एतत् तु सत्यं किन्तु माघस्य प्रतिभा विलक्षणासीत् इत्यपि न विवादविषयः ।

———

## ७. वार्तापत्रम्

मानवः एकः सामाजिकः जीवः। स समाजे जन्म लभते, समाजे वृद्धिं गच्छति, समाजे एव विनश्यति। स समाजे निवसति, समाजं विलोकयति, समाजम् आकर्णयति, तत्रैव च स्वकीयं विचारमपि प्रकटयितुं वाञ्छति। तेन सह समाजस्य पारस्परिकः विविधव्यवहारः, पारस्परिकं आदानं प्रदानं च सम्मेलनं, संघर्षो वा अनुदिनं भवति किन्तु अद्यतनः समाजः एतावान् विशालः संजातः यद् मानवस्य समस्तः पारस्परिकः सम्पर्कः केवलं परस्परसम्भाषणेन न भवितुम् अर्हति। अयं तु वार्तापत्रैः सम्यक्-तरत्वेन सम्पाद्यते। अद्य मानवः न केवलं स्वकीयस्य देशस्य वृत्तं ज्ञातुमभिलषति अपि तु निखिलविश्वस्य वार्तां गृहे एव तिष्ठन् ज्ञातुमिच्छति। अतः वार्तापत्रम् अस्माकं दैनिक व्यवहारस्य आवश्यकम् अङ्गम्। धनिकः, निर्धनो वा, शिक्षितो अशिक्षितो वा नागरिकः, ग्रामीणो वा प्रातः उत्थाय ज्ञातुमिच्छति यदद्य किं नूतनं जातम्। कोऽद्य विजयी जातः, कः पराजितः, केन अमुकं पदमलंकृतम् को वा पदच्युतः। महदाश्चर्यंकरं तु इदं यद् मानवस्य परिसरे यत्किंचित् घटितं तद् ज्ञातुं न स तादृशः आकुलः यादृशः कस्मिंश्चित् अन्यस्मिन् भागे घटितं वृत्तं ज्ञातुं भवति। अस्य कारणं स्पष्टमेव यत् तस्य जीवने, अन्येषां देशानां राजनीतिकसामाजिकार्थिकानां परिवर्तनानां सुस्पष्टः प्रभावः आयाति। विश्वस्य एकस्मिन् भागे यत् किंचिदपि जायते तस्य प्रभावः अन्य-स्मिन् भागे स्थिते जने आपतति। न कोऽपि अधुना एकाकी स्थातुं शक्नोति। अतः पारस्परिकः सहयोगः, पारस्परिकः सम्पर्कः परमावश्यकः भवति।

अस्मिन् देशे वार्तापत्रस्य जीवनं न दीर्घकालिकम्, केवलं १८३५ ई० इति वर्षात् प्राक् भारते एकमांग्लपत्रं प्रचलितमासीत्। एवं केवलं सार्धशतैकवर्षाणि व्यतीतानि यदारभ्य वार्तापत्रस्य भारते आविर्भावः जातः। ततः परं अद्यावधि अस्मिन् क्षेत्रे आशातीता प्रगतिः सम्भूता।

इदानीं विविधभाषासु अगणितानि लघुदीर्घाणि वार्तापत्राणि प्रकाशितानि दृश्यन्ते। एषु कानिचित् धार्मिकाणि, कानिचित् राजनीतिकानि, कानिचित् आर्थिक-क्षेत्र सम्बद्धानि, कियन्ति दैनिकानि, कियन्ति मासिकानि, त्रैमासिकादीनि च। यत् किंचिदपि उद्देश्यमभिलक्ष्य कस्यचित् वार्तापत्रस्य प्रकाशनं क्रियते तस्यैव विषयस्य तस्मिन् पत्रे प्राधान्यं वर्तते। सर्वेषु समुन्नतेषु राष्ट्रेषु विविधानि वार्तापत्राणि प्रकाश्यन्ते। इमान्येव वस्तुतः तस्य राष्ट्रस्य वाणी, एषां माध्यमेनैव जनाः स्वीयानि सुखदुःखानि प्रकटयन्ति।

राष्ट्रियजीवनस्योन्नयनम् अपि वार्तापत्रैः शक्यते सम्पादयितुं । राष्ट्रियविचाराणां जागर्तिः एवं जायते । वार्तापत्रैः लेखनं, पठनं, पाठनं, सम्पादनं, ज्ञानप्रसारणञ्च भवति । अगणितानां जनानां जीविकासाधनानि वार्तापत्राणि एव । वार्तापत्राणामेकः उद्योगः संजातः यस्मिन् लेखकाः, सम्पादकाः, सन्देशवाहकाः, कर्मकराः, लिपिकाः कार्यरताः । एतत्कृते विज्ञानवलं सराहनीयं येन विविधानि मुद्रणयन्त्राणि विकसितानि । वार्तापत्रैरेव सकलं भूमण्डलम् एकस्मिन् सूत्रे निवद्धं जातम् । वार्तापत्रैः देशस्य विचारधारा परिवर्तिता जायते, प्रायः जनान्दोलनानि पत्रैरेव उपचीयन्ते, अधिकारिणः वार्तापत्राणि विलोक्य जागरूकाः जायन्ते । एभिः साहित्यक्षेत्रे नवनवानां लेखानां, काव्यानां, कथानां, नाटकानाञ्च सम्वर्द्धनं भवति, एभिः राजनीतिके क्षेत्रे नेतृणां समुन्नयनं, धार्मिकक्षेत्रेषु महात्मनां सम्मानः, व्यावसायिकक्षेत्रे व्यवसायिनां प्रचारः अनुदिनं क्रियते । वार्तापत्रेषु प्रतिदिनं वस्तूनां मूल्यानि प्रदत्तानि भवन्ति । चित्रपटादीनां पुरोगमाः, क्रीडनानां वृत्तानि प्रकाशितानि भवन्ति । वस्तुतः नास्ति कोऽपि एतादृशः विषयः य वार्तापत्रैः न व्यवह्रियते । अन्येषां राष्ट्राणां प्रगतिं विलोक्य देशवासिनः प्रेरणां गृहणन्ति । वार्तापत्राणि जनसाधारणस्य संघर्षं समुत्साहं समेषां पुरतः संस्थापयन्ति । निर्वाचनसमये तु वार्तापत्राणि महान्ति उपयोगीनि भवन्ति । अनेन रूपेण अद्यतनं जीवनं वार्तापत्रैः संचाल्यते । विश्वमिदं वार्तापत्राधीनमेव ।

परन्तु अस्मिन् विश्वे न किमपि केवलं गुणयुक्तम्, यत्र गुणाः भवन्ति तत्रैव दोषा अपि आयान्ति, एतत् तु शाश्वतिकः नियमः । यदा कदा वार्तापत्रैः भ्रामकाः असत्यप्रचाराः प्रकाश्यन्ते भ्रान्तयः समुत्पाद्यन्ते । एभिः अश्लील विज्ञापनानि दीयन्ते यैः नवयुवकाः कुपथगाः युवतयश्च कुमार्गगामिन्यः भवन्ति एभिः प्रेरिताः धार्मिकसंघर्षाः अपि जायन्ते यैः अपूरणीया क्षतिः जायते । अतः परमावश्यकमिदं यत् एतेषां सम्पादकाः स्वनियोगं पक्षपातरहितभावनया कुर्युः । युवका अपि वार्तापत्राणि कार्यकारणविश्लेषणं कृत्वैव पठेयुः ।

०—०

## ८ उपमा कालिदासस्य

सहृदयहृदयाह्लादकः, सरसकविताकामिनीकान्तः, सुरभारतीसमुपासकः, कविकुलगुरुः कालिदासः कस्य श्रुतिपथं नायातः। अप्रतिमस्यास्य कविशिरोमणेः कीर्तिसौरभं न केवलं स्वदेशे अपितु निखिले दिग्दिगन्तरे विश्वे व्याप्तम्। कीदृशं रसभावपूरितं महाकाव्यं, कीदृशोऽलौकिकानाम् उपमानां विन्यासः, कीदृशानि मनोहराणि नाटकानि अनेन महाभागेन प्रणीतानि इति न तिरोहितं कस्यचित्। वस्तुतः महाकविकालिदासेन स्वीयाभिः विविधाभिः सारगर्भाभिः रचनाभिः समलंकृता देववाणी, न तु वाण्या कालिदासः। कालिदासस्य वर्णनानि अद्यापि तेनैव रूपेण हृदयहारकाणि येन रूपेण तस्य जीवनकाले तानि आसन्। तानि तु शाश्वतिकानि सत्यानि कालातीतानि च। तस्य काव्येनैव भारतवासिनः काव्यक्षेत्रे उन्नतमस्तकाः। संस्कृतसाहित्याकाशे स एव एकः देदीप्यमानः समुज्ज्वलो दिनकरो द्योतते।

परं महत् कष्टं यत् कालिदासेन स्वजीवनविषये न किमपि उल्लिखितम्। अयं कदा जातः, को देशः अनेन महाभागेन स्वजन्मनालंकृतः इत्यपि अस्माभिः न ज्ञायते। अस्मिन् विषये विदुषां महान् विवादः। तत्र प्रचलन्ति परस्पर विभिन्नाः जनश्रुतयः याः इमं प्रश्नमधिकं जटिलं विदधति। अतोऽधिकं कष्टतरम् इदमेव यत् भारतीयसाहित्ये अनेके कालिदासाः विक्रमादित्याश्च जाताः। अतः केन कालिदासेन कतमा रचना विरचिता, कः कस्य विक्रमादित्यस्य सभायामासीत् एतत्तु नैव निश्चेतुं शक्यते। अद्यावधि यत् किमपि प्रमाणं प्रकाशे आयातं तदनुसारं स गुप्तकाले अथवा ईसवीतः प्राक् प्रथमायां शताब्द्याम् इमां भारतभुवमलंचकार इति तु निश्चप्रचम्।

अनेन महाकविना साहित्यक्षेत्रे यादृशी समृद्धिः समर्पिता तस्याः कीर्तनं अल्पीयसि काले न शक्यते विधातुं। अतः तदंशमात्रप्रशंसयैव समर्प्यते तस्मै श्रद्धासुमनसामञ्जलिरधुना। अनेन महाभागेन न केवलं महाकाव्यं अपितु मेघदूतसमं खण्डकाव्यं ऋतुसंहारमुक्तकश्च विरचितम्। स्वकीयेषु ग्रंथेषु अनेन भारतीयानां प्राचीनां परम्परामधिकृत्य स्वीयाः अनुपमाः उपमाः, दिव्याः अनुभवाः, विचित्राणि मनोहराणि प्रकृतिचित्राणि, मनोज्ञा रसाभिव्यक्तिः, चमत्कारयुक्तालंकाराश्च विन्यस्ताः—यथोक्तम् बाण महाभागेन—

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते॥

अनेन महाकविना उपमां प्रति विशिष्टः पक्षपातः प्रदर्शितः अतो हि उक्तम् **"उपमा कालिदासस्य"** । कालिदासस्योपमानां वैशिष्टयमेव वस्तुतः तस्य ख्यातेः मूलकारणम् । अतः तस्य उपमानां वैशिष्ट्यमत्र विलोकनीयमेव । यथा—

(i) तस्य विन्यस्तानि उपमानानि उपमेयस्य अत्यन्त सदृशानि ।

**हरस्तु किंचित् परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥**

कुमारसम्भवम् ३/६७

अत्र शिवस्य उपमा समुद्रेण सह तयोः गाम्भीर्यमवलम्ब्य प्रदर्शिता । यथा चन्द्रोदये गभीरः समुद्रः विचलति, तथैव गम्भीरः शिवोऽपि उमायाः मुखचन्द्रं विलोक्य विचलितः जातः । उभयोः न केवलं गभीरत्वे साम्यं अपितु संक्षोभेऽपि दरीदृश्यते ।

(ii) अन्यत्रापि विलोकनीयं कीदृशी उपयुक्ता रमणीया च कालिदासस्य उपमा राजते—

**तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।**
**मार्गाचलव्यतिकराकुलितेव सिन्धुःशैलाधिराजतनया न ययौ न तस्थौ ॥**

कुमारसम्भवम् ५/८७

अत्र शिवं विलोक्य पार्वती सहसैव स्तब्धा जायते । कविः तां स्तब्धतामेव वर्णयति—कम्पमाना पार्वती स्वमुद्धृतं पदम् उत्थापयन्ती एव तथैवातिष्ठत् यथा कापि पर्वतारुद्धा नदी न अग्रे चलितुं शक्नोति न च स्थिरा भवति ।

(iii) कालिदासस्य उपमाः अपूर्वाः, मौलिकाः, स्वाभाविकाः प्रसंगानुरूपाश्च । यथा—

**पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टान्,**
**पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।**
**चक्षुः खेदात् सलिलगुरुभिःपक्ष्मभिश्छादयन्तीं,**
**साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥**

मेघदूतम् १/२३

मेघदूते वियोगव्यथान्वितायाः अश्रुपूर्णनेत्रायाः यक्षस्य पत्न्याः स्वरूपं वर्णयन् कालिदासः एकामश्रुतपूर्वां नवीनां कल्पनां अस्माकं पुरतः समुपस्थापयति । स कथयति चेत् कस्मिंश्चित् दिवसे सूर्यः मेघाच्छन्नः भवति तदा स्थलकमलिनी स्वभावतः विकचितुम् अभिलषति किन्तु भानुं समक्षं न प्राप्य सा न विकचति तथैव यक्षस्य कान्ता चन्द्रं विलोक्य सोल्लासं वहिस्तु आगच्छति किन्तु पतिमनुपलभ्य प्रत्यावर्तते । सा स्वीयम् अश्रुपूर्णं नयनं नोन्मीलयति न च निमीलयति ।

(iv) उपमानां कृते कालिदासेन सर्वदा नूतनाः कल्पनाः विहिताः।
यथा—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्र मार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥

रघुवंशम् ६/६७

कालिदासप्रयुक्तासु उपमासु इयमतीव लोकप्रिया। अत्र इन्दुमती यदा स्वयम्वरे स्वपत्युः वरणाय सभायां गच्छति सा तत्रोपस्थितान् नृपान् क्रमेण विलोकयति। सा एकैकं राजानं विलोक्य यदा तं विहाय अन्यमुपसरति स नृपः तथैव विवर्णभावं भजते यथा रात्रौ राजमार्गे सञ्चरन्त्यां दीपशिखायां पृष्ठतः त्यक्तं भवनं मलिनं प्रकाशहीनञ्च जायते।

(v) कालिदासस्य उपमाः व्यापकक्षेत्रात् गृहीताः।

यथा—स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददानां, छायेव भूपतिरन्वगच्छत्॥

रघुवंशम् २।६

अत्र भूपतेः दिलीपस्य उपमा छायया सह प्रदर्शिता। येन प्रकारेण कस्यापि छाया तं सदानुगच्छति, न कदापि जहाति तेनैव रूपेण दिलीपः धेनौ स्थितायाम् अतिष्ठत्, प्रयातायां तस्याम् अन्वगच्छत् तां, तां तिष्ठन्तीं विलोक्य स्वयम् उपाविशत्, तां जलं पाययित्वा च स्वयं जलाभिलाषी भूत्वा तामन्वगच्छत्।

(vi) अपरमपि विलोकनीयम्। सरसायां भाषायाम् उपनिबद्धास्ताः काव्ये सौष्ठवमादधते न तु अवरोधम्। यथा—

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव संध्या॥ रघुवंशम् २।२०

यदा दिलीपेनानुगम्यमाना धेनुः वनात् गृहमायाति राज्ञी सुदक्षिणा तस्याः स्वागतं करोति। तस्मिन् क्षणे सा धेनुः तथैव अभासत यथा दिनक्षपामध्ये संध्या भवति। दिनम् उज्ज्वलं नृप इव, क्षपा प्रकाशहीना राज्ञी इव, मध्ये धेनुः संध्या इव प्रत्यभात्। अनेन प्रकारेण एतादृश्यः अगणिताः उपमाः कालिदासेन स्वकीयेषु काव्येषु पदे पदे प्रदर्शिताः। अतः वाणीविलासो विलक्षणया प्रतिभया भासमानः, कविता कामिन्या प्रकामं काम्यमानः भावकुसुमानां गुम्फने पटीयान् कालिदासः अमरतामभजत।

## ६. सत् संगतिः कथय किं न करोति पुंसाम्

विचित्रोऽयं संसारः। शुभाशुभानि, शिवाशिवानि वस्तूनि अत्र विद्यन्ते। अस्मिन् जगतीतले सन्ति दुर्जनाः सज्जनाश्च किन्तु न कोऽपि जन्मना सज्जनः न च दुर्जनः भवति। संसर्गादेव सज्जनाः दुर्जनाश्च जायन्ते, यथोक्तम्—**संसर्गजा दोषगुणाः भवन्ति**। यः जनः यादृशीं संगतिं करोति, यादृशेन जनेन सह उपविशति, वसति, व्यवहरति, तादृशः स्वयं भवति। प्राणिनां दैनिकजीवने दुर्जनानां सज्जनानां समेषां पारस्परिकः सम्पर्कः भवति। सज्जनानां सम्पर्कः सुखप्रदः, दुर्जनानाञ्च दुःखप्रदः भवति। अतः सर्वदा सतां संगः ग्राह्यः।

सत्संगत्या सद्विचाराः, सद्भावनाः सौजन्यादिगुणाः जायन्ते। सतां साहाय्येन जनाः उन्नतिपथं प्राप्तुं प्रभवन्ति। कुत्सिताः अपि जनाः सत्सङ्गत्या महान्तः भवन्ति। तथा हि—देवानां शिरसि विनिवेशितानि पुष्पाणि पूजार्हाणि भवन्ति न तु कदाचित् शवस्थितानि। कुसुमानां संगत्या कीटोऽपि देवानां शिरांसि अधितिष्ठति। वक्रोऽपि चन्द्रः महामहिमशालिनः हरस्य शिरसि विराजते। संगत्यैव युधिष्ठिरस्य सारमेयः सदेहं स्वर्गं गतः। अधःपाति जलं नलसम्पर्केण उच्चशिखरम् आरोहति। दुर्दान्तः वाल्मीकिः सत्संगत्यैव महर्षिः वाल्मीकिः संजातः इति लोके प्रसिद्धिः। वस्तुतः सत्संगेन मानवेषु सद्बुद्धिः जायते, सद्बुद्धि सम्पन्नाः मनोरथेषु सफलीभूताः भवन्ति। सत्संगत्या अकिंचनानां मानवानां जन्म दारिद्र्यं विनश्यति। यथोक्तम्—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं।
मानोन्नतिं दिशति पापमपाकरोतिं॥
कीर्तिं तनोति वितनोति च दिक्षु लक्ष्मीं।
सत्संगतिः कथय किं न करोति पुंसाम्॥

मानवः स्वजीवनं समुन्नेतुं विविधानि साधनानि संचिनोति किन्तु यावत् सद्बुद्धिः न समुदेति तावत् सर्वाणि साधनानि वितथानि भवन्ति। सज्जनाः स्वकीयेन ज्ञानमयेन प्रकाशेन हृदिस्थितमपि तमः समूलं छिन्दन्ति। ते सकलानि पापानि

दूरीकुर्वन्ति, चेतांसि प्रसादयन्ति। अन्यच्च सद्बुद्धिसम्पन्नाः, ज्ञानवन्तः, स्वाध्याय-निरताः, परोपकारपरायणाः जनाः सर्वेषां संकटहारकाः भवन्ति। तैः साकं सदा सत्संस्काराः जायन्ते।

किं बहुना सज्जनानां सम्पर्के दुर्जनाः अपि सज्जनताम् उपयान्ति।

यथोक्तम्—

कल्पद्रुमः कल्पितमेव सूते,
सा कामधुक् कामितमेव दोग्धि।
चिन्तामणिश्चिन्तितमेव दत्ते,
सतां तु संगः सकलं प्रसूते॥

इदं न केवलं मानवेषु, न वा पशुपक्षिषु सत्यं प्रत्युत राष्ट्रेष्वपि। अद्यत्वे संसारे लघुविशालानि बहूनि राष्ट्राणि विद्यन्ते। लघूनि राष्ट्राणि विशालानां छायायाम् आगत्य सुखेन तिष्ठन्ति अन्यथा अन्यैः दुराचारिभिः विविधरूपेण पीड्यन्ते। अस्मिन् आधुनिके वैचित्र्योपेते जगतीतले स्वोन्नत्यै समेषाम् ईहा वर्तते। परं अवाप्तुम् अभि-प्रेतान् विषयान्, अधिगन्तुं स्वोद्देश्यानि सत्संगतिरेव सर्वोत्तमं साधनं कथिता बुधैः। अतो दुर्जनानां अनाचारिणाम्, असत्यवादिनाम्, अविवेकिनां सहवासः न कर्त्तव्यः।
यथोक्तम्—

किं तेन हेमगिरिणा रजताद्रिणा वा,
यत्राश्रिता हि तरवस्तरव त एव।
मन्यामहे मलयमेव यदाश्रयेण,
कंकोलनिम्ब कुटजा अपि चन्दनाः स्युः॥

सत् संगतिम् अधिगन्तुं सद्ग्रन्थाः अध्येतव्याः, महात्मनः समाश्रयणीयाः, सत्-स्थानानि सेवितव्यानि। सततं परीक्ष्यैव अपरिचितैः साकं व्यवहर्तव्यम्। अद्यत्वे बालकाः बालिकाश्च चलचित्राणि पश्यन्ति, एभिः चलचित्रैः तेषां मनसि कुविचाराः जायन्ते। कुविचारैः प्रभाविताः ते कुमार्गगामिनः भवन्ति। अनेन रूपेण राष्ट्रस्य हानिः भवति। अतो हि सत्संग एव सदा विधातव्यः।



## ६. सत् संगतिः कथय किं न करोति पुंसाम्

विचित्रोऽयं संसारः। शुभाशुभानि, शिवाशिवानि वस्तूनि अत्र विद्यन्ते। अस्मिन् जगतीतले सन्ति दुर्जनाः सज्जनाश्च किन्तु न कोऽपि जन्मना सज्जनः न च दुर्जनः भवति। संसर्गादेव सज्जनाः दुर्जनाश्च जायन्ते, यथोक्तम्—**संसर्गजा दोषगुणाः भवन्ति**। यः जनः यादृशीं संगतिं करोति, यादृशेन जनेन सह उपविशति, वसति, व्यवहरति, तादृशः स्वयं भवति। प्राणिनां दैनिकजीवने दुर्जनानां सज्जनानां समेषां पारस्परिकः सम्पर्कः भवति। सज्जनानां सम्पर्कः सुखप्रदः, दुर्जनानाञ्च दुःखप्रदः भवति। अतः सर्वदा सतां संगः ग्राह्यः।

सत्संगत्या सद्विचाराः, सद्भावनाः सौजन्यादिगुणाः जायन्ते। सतां साहाय्येन जनाः उन्नतिपथं प्राप्तुं प्रभवन्ति। कुत्सिताः अपि जनाः सत्सङ्गत्या महान्तः भवन्ति। तथा हि—देवानां शिरसि विनिवेशितानि पुष्पाणि पूजार्हाणि भवन्ति न तु कदाचित् शवस्थितानि। कुसुमानां संगत्या कीटोऽपि देवानां शिरांसि अधितिष्ठति। वक्रोऽपि चन्द्रः महामहिमशालिनः हरस्य शिरसि विराजते। संगत्यैव युधिष्ठिरस्य सारमेयः सदेहं स्वर्गं गतः। अधःपाति जलं नलसम्पर्केण उच्चशिखरम् आरोहति। दुर्दान्तः वाल्मीकिः सत्संगत्यैव महर्षिः वाल्मीकिः संजातः इति लोके प्रसिद्धिः। वस्तुतः सत्संगेन मानवेषु सद्बुद्धिः जायते, सद्बुद्धि सम्पन्नाः मनोरथेषु सफलीभूताः भवन्ति। सत्संगत्या अकिंचनानां मानवानां जन्म दारिद्र्यं विनश्यति। यथोक्तम्—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं।
मानोन्नतिं दिशति पापमपाकरोतिं॥
कीर्तिं तनोति वितनोति च दिक्षु लक्ष्मीं।
सत्संगतिः कथय किं न करोति पुंसाम्॥

मानवः स्वजीवनं समुन्नेतुं विविधानि साधनानि संचिनोति किन्तु यावत् सद्बुद्धिः न समुदेति तावत् सर्वाणि साधनानि वितथानि भवन्ति। सज्जनाः स्वकीयेन ज्ञानमयेन प्रकाशेन हृदिस्थितमपि तमः समूलं छिन्दन्ति। ते सकलानि पापानि

दूरीकुर्वन्ति, चेतांसि प्रसादयन्ति। अन्यच्च सद्बुद्धिसम्पन्नाः, ज्ञानवन्तः, स्वाध्याय-निरताः, परोपकारपरायणाः जनाः सर्वेषां संकटहारकाः भवन्ति। तैः साकं सदा सत्संस्काराः जायन्ते।

किं बहुना सज्जनानां सम्पर्के दुर्जनाः अपि सज्जनताम् उपयान्ति।

यथोक्तम्—

कल्पद्रुमः कल्पितमेव सूते,
सा कामधुक् कामितमेव दोग्धि।
चिन्तामणिश्चिन्तितमेव दत्ते,
सतां तु संगः सकलं प्रसूते॥

इदं न केवलं मानवेषु, न वा पशुपक्षिषु सत्यं प्रत्युत राष्ट्रेष्वपि। अद्यत्वे संसारे लघुविशालानि बहूनि राष्ट्राणि विद्यन्ते। लघूनि राष्ट्राणि विशालानां छायायाम् आगत्य सुखेन तिष्ठन्ति अन्यथा अन्यैः दुराचारिभिः विविधरूपेण पीड्यन्ते। अस्मिन् आधुनिके वैचित्र्योपेते जगतीतले स्वोन्नत्यै समेषाम् ईहा वर्तते। परं अवाप्तुम् अभि-प्रेतान् विषयान्, अधिगन्तुं स्वोद्देश्यानि सत्संगतिरेव सर्वोत्तमं साधनं कथिता बुधैः। अतो दुर्जनानां अनाचारिणाम्, असत्यवादिनाम्, अविवेकिनां सहवासः न कर्त्तव्यः।
यथोक्तम्—

किं तेन हेमगिरिणा रजताद्रिणा वा,
यत्राश्रिता हि तरवस्तरव त एव।
मन्यामहे मलयमेव यदाश्रयेण,
कंकोलनिम्ब कुटजा अपि चन्दनाः स्युः॥

सत् संगतिम् अधिगन्तुं सद्ग्रन्थाः अध्येतव्याः, महात्मनः समाश्रयणीयाः, सत्-स्थानानि सेवितव्यानि। सततं परीक्ष्यैव अपरिचितैः साकं व्यवहर्तव्यम्। अद्यत्वे बालकाः बालिकाश्च चलचित्राणि पश्यन्ति, एभिः चलचित्रैः तेषां मनसि कुविचाराः जायन्ते। कुविचारैः प्रभाविताः ते कुमार्गगामिनः भवन्ति। अनेन रूपेण राष्ट्रस्य हानिः भवति। अतो हि सत्संग एव सदा विधातव्यः।



## १०. परोपकाराय सतां विभूतयः

शमदमादिसद्गुणोपेताः, उदारमतयः, निसर्गत एव धर्मबुद्धयः सन्तः केषां न हरन्ति चेतांसि ? ये नित्यं परगुणपरमाणून् पर्वतीकुर्वन्ति, ये दुःखितानां दुःखं विलोक्य स्वयमेव व्यथयन्ति, ये कस्यचित् करुणक्रन्दनमाकर्ण्य द्रवीभूताः भवन्ति, ये निःस्वार्थं पीडितानां पीडां जानन्ति चापाकुर्वन्ति, ये स्वीयां चिन्तां विहाय सततं परोपकारे निरताः तिष्ठन्ति, त एव वस्तुतः महामान्याः, श्रद्धेयाः, त एव धन्याः, त एव सज्जनाः। सज्जनानां चेतांसि करुणोपेतानि भवन्ति, तानि विषमाद् विषमतरे समुपस्थितेपि समये विक्रियाम् न उपयान्ति । अतः परोपकारपरायणाः सन्तः "आत्मवत् सर्वभूतेषु, लोष्ठवत् परद्रव्येषु" इति महतीं श्लाघ्यां विचारधाराम् अवलम्ब्य समाजे व्यवहरन्ति । ते सदा मनसा वाचा कर्मणा सकलं स्वीयं परार्थे समपर्यन्ति । यथोक्तम् —

उपकर्तुं प्रियं कर्तुं कर्तुं स्नेहमकृत्रिमम् ।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ।।

परोपकाराय प्राणत्यागिनां, परहिताय सर्वस्वदातॄणाम् अमरचरितैः आपूरिता भारतीया सांस्कृतिकी परम्परा । तथा हि—सर्वभूतहिते रतः, त्यागशीलः, पितृभक्तः, लोकाह्लादकरः, मर्यादा पुरुषोत्तमः रामः कस्य न प्रियो जातः, परार्थाय एवं स्वशरीरत्यागिनः शिवेर्नाम केन न गीयते, एवं दानवीरकर्णः, त्यागवीरः दधीचिश्च कस्य श्रुतिपथं नायातः, इमे महानुभावाः सर्वस्वं स्वकीयं परेभ्यः प्रायच्छन् । एतेषां महानुभावानां विभूतयः परार्थाय एव गताः । ईदृशानां जनानां विषये उक्तं साहित्ये—

पिबन्ति नद्यः स्वयमेव नाम्भः,
स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारिवाहाः,
परोपकाराय सतां विभूतयः ।।

अपरञ्च

भवन्ति नम्रास्तरवः फलोद्गमै
र्नवाम्बुभिः भूरि विलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ।।

वस्तुतः वैचित्र्योपेते जगतीतलेऽस्मिन् परोपकारः एव मानवानां परमस्पृहणीयो गुणः। यद्यपि आधुनिके युगे विरला एव एतादृशाः संयताः जनाः, एषां मनसि जातिकृतो, देशकृतो वा भेदो न वर्तते किन्तु साम्प्रतमपि न शून्येयं वसुन्धरा त्यागशीलैः महापुरुषैः। तत्र सन्ति त्रिविधाः जनाः अस्मिन् असारे संसारे—

( i ) ये स्वार्थहानिं विधाय परोपकारं कुर्वन्ति।

( ii ) ये स्वार्थहानिं विना परोपकारं कुर्वन्ति।

(iii) ये परार्थं विनाश्य स्वार्थं साधयन्ति।

येषु प्रथमायाः श्रेण्याः महामानवाः हि वस्तुतः करुणापराः, त एव सज्जनाः, त एव लोकोपकारकाः। यथोक्तम्—

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम्।
शमयति परितापं छाययोपाश्रितानाम्॥

साम्प्रतं समाजस्य स्थितिः अतीव विषमा संजाता। जनाः स्वार्थपूर्तिं वाञ्छन्ति किन्तु मानवजीवनस्य सार्थकता वस्तुतः लोककल्याणे एव जायते। मनुजस्य प्रमुखः धर्मः लोकसेवा एव। येन रूपेण वीजम् आत्मानं विनाश्य रमणीयफलदायकाय तरुवराय जन्म प्रददाति, तेनैव रूपेण मानवजीवनेऽपि प्राणी आत्मानं परिहिताय समर्प्य जीवनस्य सार्थकताम् अभिलषति। अतः परोपकारः एका महत्तमा भावना यस्याः जन्म प्रेमकरुणयोः भवति। यस्य मानवस्य हृदयं यावत् विशालं भवति स तावानेव कल्याणरतः भवति। कस्मैचित् संकटापन्नाय साहाय्यम्, कस्मैचित् बुभुक्षाय भोजनम्, पिपासिताय जलम्, आतुरायौषधम् इति सर्वाणि परोपकारस्वरूपाणि। परोपकररताः जनाः परोपकारं विधाय आन्तरिकम् आनन्दं, वास्तविकमुल्लासम् अनुभवन्ति। ते व्यासमहाभागानां वचनानि परिपालयन्ति।

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

उदारमतयः जनाः न कदापि कस्मैचित् कष्टं दातुम् अभिलषन्ति। गीतायामपि उक्तं भगवता कृष्णेन—

भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्।

अद्य विश्वे जनबाहुल्यं जातं, जीवनोपयोगिनां वस्तूनां सर्वथा अभावः, अतः प्रायः सामान्य जनाः स्वार्थपराः दृश्यन्ते। एतादृशे समये राष्ट्रनिर्माणाय परोपकार-

निरतानां मानवानां महती आवश्यकता वर्तते । प्राचीनकाले कूपखननं आश्रयभवनानां निर्माणं, मार्गेषु वृक्षारोपणं, उद्यानानां परिकल्पना, तीर्थेषु भोजनप्रदानम् परोपकारवृत्यैव अक्रियन्त । अद्य तादृशी प्रवृत्तिः ह्रासम् उपगता, तथापि भारतीयसंस्कृतिपोषकाः महान्तः पुरुषाः, धनधान्यसमृद्धाः परोपकाराय यतन्ते इति । वस्तुतः सतां विभूतयः परोपकाराय एव ।

---

## ११ संस्कृतशिक्षणसुधाराः

इदं सुविदितं विपश्चितां यत् सुरभारती पञ्चसहस्र वर्षाणि यावत् विभिन्नेषु झंझावातेषु दृढं स्थित्वा स्वीयां क्षमतां साधु साधितवती । इदमपि नाविदितं यदस्यामेव वेदानां शाश्वतः ज्ञानराशिः, तपःपूतानि शास्त्राणि, मानवधर्मसंवलिताः स्मृतयः, रसमयानि च महाकाव्यानि नाटकादीनि च विद्यन्ते । परं यदि कस्यापि पुरतः मिष्टान्नस्य केवलं कीर्तनं क्रियेत न चास्मै भोक्तुं दीयेत तत् कथं स मिष्टान्नाय यतेत । संस्कृतस्य अनुपमो मधुरिमा, अपरिमिता व्यावहारिकी शक्तिः, महत् उपयोगि साहित्यं चेत् पाठकैः न ज्ञायेत तर्हि कथं ते अस्य कृते यतेरन् । केवलं रामः रामौ इति कृत्वा संस्कृतस्य अध्ययनं नैव सम्भाव्यते न अनेन सामान्यजनेषु अभिरुचिः जागरयितुं शक्यते । यावत् अध्येतारः नैव जानन्ति यत् संस्कृतसाहित्ये किं परमरमणीयं किं च लाभकरं, तावद् अपठने तेषां को दोषः ।

पुरा तु संस्कृतं जीवनस्योन्नायकं, सुखशान्तिसाधकं, ज्ञानालोकप्रसारकं, आचारसंचारकं इति कृत्वा पठ्यते स्म । तदधुना गतम् । अस्मिन् प्रगतिशीले युगे नवीनाः आचाराः, नवीनाः विचाराः अतः संस्कृतं न केऽपि पठन्ति । ये केऽपि पठन्तः दृश्यन्ते ते वस्तुतः स्वयं नैव वान्छन्ति, अपितु बलात् वृत्यादिना आकृष्यन्ते । येषां कृते अन्येषां विषयाणाम् अध्ययनं सुलभं सुकरञ्च न भवति त एव इमां पठन्ति ।

तत् विचारणीयमस्माभिः संस्कृतस्य ह्रासे किम् अध्यापकानां दोषः वा शासकानां दोषः, शिक्षाप्रणाल्याः दोषः आहोस्वित् अन्यः कश्चित् दोषः । शासनेन संस्कृतपरीक्षाणाम् अन्येषां विषयाणां परीक्षाभिः सह साम्यं प्रदत्तं, संस्कृतविश्वविद्यालयः स्थापितः, एतत्कृते पर्याप्तः धनराशिः प्रतिवर्षं समायोज्यते । अतो हि न शासकाः दोषभाजः भवितुम् अर्हन्ति । तत् सुनिश्चितमिदं यद् अध्यापकानां दोषः, अध्यापनप्रणाल्याः दोषः येन स्वतंत्रे भारतेऽपि संस्कृतस्य इयं शोचनीया दशा । अद्य संस्कृताध्यापकस्य अर्थः दैन्यम् ।

अध्यापनप्रणाल्यनुसारं तत्र सन्ति तिस्रः धाराः—

( i ) माध्यमिक विद्यालयेषु अनिवार्यरूपेण संस्कृताध्ययनम् ।

(ii ) माध्यमिककक्षातः स्नातकोत्तरकक्षापर्यन्तं वैकल्पिकविषयरूपेण संस्कृताध्ययनम् ।

(iii) संस्कृतविश्वविद्यालये अन्येषु च तत्सम्बद्धेषु संस्कृतविद्यालयेषु संस्कृताध्ययनम् ।

आसु धारासु प्रथमायां तु संस्कृते चञ्चुप्रवेशोऽपि न जायते । छात्राः येन केनापि रूपेण परीक्षोत्तरणाय अध्ययनं कुर्वन्ति । यदा कदा ते अध्ययनं विनैव स्वकार्यं सम्पादयन्ति ।

द्वितीयायां धारायां ये विद्यार्थिनः इमां भाषां पठन्ति ते साहित्यदृष्ट्या इमां जानन्ति । तेऽस्याः विषयवस्तु अवगच्छन्ति परं तेषु प्रायशः प्रतिशतं दश अपि अस्यां न व्यवहरन्ति । तेषाम् अध्यापकाः अपि भाषारूपेण अस्याः व्यवहारं नैव कुर्वन्ति । अतः छात्रेषु प्रतिशतं नवनवत्यां न कदापि भाषारुचिः जागर्ति । न ते अस्यां भाषायां लिखन्ति न च संलपन्ति । तेषु अल्पीयांसः एव अनया स्वकीयाम् आजीविकां प्राप्नुवन्ति ।

तृतीयायां धारायां छात्राः प्राचीनया परिपाट्या एव अध्याप्यन्ते । तत्र आधुनिक-मनोविज्ञानस्य न काऽपि गणना । यद्यपि तेषां संस्कृतज्ञानं सापेक्षरूपेण सुष्ठु भवति तथापि तत्रापि ह्रासः समायातः ।

अतः संस्कृतोत्थानाय किं करणीयमिदानीम् इति विचारणीयम् । अत्र दीयन्ते कतिचित् उपचाराः । आशास्यते विचारभाजः भविष्यन्ति विदुषाम् ।

१ सर्वासु धारासु एकयैव प्रणाल्या इयं पाठनीया ।

२ का सा प्रणाली भवेत् इति सांप्रतिकीं व्यवस्थां विलोक्य संगोष्ठीनां माध्यमेन विवेचनीया विद्वद्भिः । प्राचीनपरिपाट्यां चेत् व्यावहारिकं मनोवैज्ञानिकं स्वरूपं दीयेत तदा काचिद् अनुपमा प्रणाली आविर्भवेत् इति अस्माकम् अनुभवः ।

३ संस्कृताध्यापकानां चयनं तावत् न भवेत् यावत् तेषु अस्यां भाषायां धारा-वाहिक सम्भाषणस्य लेखनस्य च क्षमता न भवेत् ।

(iv) प्रारम्भकेषु संस्कृतपुस्तकेषु रुचिकराः पाठाः भवेयुः येषु बालकस्य परिवेशस्य चर्चा भवेत्, भाषायाः स्वाभाविकं स्वरूपं चायात् ।

(v ) शुद्धसंस्कृतम् अलिखित्वा संस्कृतपरीक्षोत्तरणं न भवेत् ।

(vi) विद्यालयेषु प्रतिमासं संस्कृतसम्भाषणप्रतियोगिताः भवेयुः ।

(vii) संस्कृते विलिखिताभ्यः कथाभ्यः कविताभ्यः अथ चास्यां भाषायां विरचितेभ्यः नाटकेभ्यः पुरस्काराः प्रदेयाः ।

(viii) संस्कृतव्याकरणस्य सरलीकरणं भवेत् ।

(ix) संप्रति ये मर्मज्ञाः विद्वांसः न्यायव्याकरणादीनां क्लिष्टानां विषयाणां अध्यापने समर्थाः तेषां परम्परा अन्त्या प्रतीयते । अतः आगामिनी पंक्तिः छात्रेभ्यः चयनं कृत्वा शासकैः निर्मेया अन्यथा पारम्परिकाणां दुरूहविषयाणाम् अध्यापनं असम्भवं भविष्यति । संप्रति संस्कृत–अकादमी विद्यते एतदेव कार्यम् अनया यदि सम्पाद्येत अस्याः स्थापनं सफलं स्यात् ।

(x) प्रशिक्षणविद्यालयाः संस्कृताध्यापकानां प्रत्यक्षपद्धत्या प्रशिक्षणं कुर्युः ।

(xi) संस्कृतविद्यालयानां सक्रियं निरीक्षणं प्रचुरसाहाय्यं काले काले अचिरं भवेत् ।

(xii) सर्वत्र संस्कृताध्यापकस्य कृते संस्कृतविश्वविद्यालयपरीक्षोत्तीर्णता अपेक्षिता भवेत् ।

(xiii) संस्कृताध्यापकानां काले काले शास्त्रार्थसभाः कार्याः विजेतृभ्यः पुरस्काराः प्रदेयाः ।

———

## १२ भारवेरर्थगौरवम्

गीर्वाणगिरो गगने भारूपः, भगवतः धूर्जटेः परमोपासकः, भावोपेतकाव्यप्रणेता भारविः षष्ठ्यां शताब्द्यां खिस्तीयायां भारतभुवमलंचकार । दक्षिणात्यः अयं महाभागः पुलकेशि द्वितीयस्य अनुजस्य विष्णुवर्धनस्य सभायाः एकममूल्यं रत्नमासीत् । अस्य स्थितिकालः बीजापुरस्थितेन ५५६ इति शकाब्दांकितेन ऐहोल शिलालेखेन सम्यग् निर्णीयते । †

---

† पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च ।
समासु समतीतासु शकानामपि भूभुजाम् ॥

येनायोजिन वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्तिः कविताश्रितकालिदास भारविकीर्तिः ॥

केनचित् जैन कविना रविकीर्तिना तत्रोल्लिखितं वर्तते यत् तस्य प्रतिभा कालिदासभारवितुल्या एव किन्तु बाणमहाभागेन भारवेरुल्लेखः अन्यैः कविभिः सह न विहितः। अनेन प्रतिभाति यदस्य कीर्तिसौरभं उत्तरभारते तावत्कालपर्यन्तं न प्रसृतम् आसीत्। अपरतः माघस्य काव्ये अस्य काव्यस्यानुकरणं दृश्यते येन निश्चीयते यदयं महाभागः माघस्य पूर्ववर्ती कालिदासस्य च परवर्ती कविरासीत्।

महाकवेः भारवेः प्रशस्तिः तस्य एकमात्रकीर्तिकलेवरे किरातार्जुनीये महाकाव्ये आधारिता। किरातार्जुनीयस्य स्रोतः महाभारतस्य वनपर्वणि वर्णितं कथानकमस्ति। अस्मिन् कथानके एकं संक्षिप्तं वृत्तं प्रदत्तम्—तथा हि—यदा द्यूते पराजिताः पाण्डवाः द्वैतवने निवसन्तः आसन् तदैव एकः वनेचरः दूतः युधिष्ठिरं दुर्योधनस्य शासनव्यवस्थायाः स्वरूपं वर्णयति। इदं वृत्तं विज्ञाय भीमः द्रौपदी च युधिष्ठिरं दुर्योधनेन सह योद्धुं प्रेरयतः किन्तु युधिष्ठिरः तत् नाङ्गीकरोति। ततः परं महर्षिः व्यासः तत्रैवागत्य पाण्डवेभ्यः परामर्शं ददाति यदर्जुनः इन्द्रकीलपर्वते तपः कृत्वा पाशुपतास्त्रं प्राप्नुयात्। अर्जुनः तत्र गत्वा तपश्चरति। तस्मिन्नेव समये किरात—वेशधारी शिवः अर्जुनेन सह युध्यति। अर्जुनस्य साहसेन पराक्रमेण च शिवः प्रसन्नः जायते च तस्मै पाशुपतास्त्रं यच्छति। इदमेव केवलं कथानकम् अवलम्ब्य भारविना एतत् महाकाव्यं विरचितम्। अस्मिन् प्रसंगे सरसं ऋतुवर्णनं, पर्वतवर्णनं, आलंकारिकं जलक्रीडादीनां अन्येषां च वस्तूनां वर्णनं महाकाव्यपद्धत्यनुसारं प्रदर्शितम्।

**तस्य अभिनवशैली—**

संस्कृत साहित्यस्य विविधासु धारासु महाकविः भारविः महाकाव्यप्रणेतृषु अन्यतमः आसीत्। अनेन महाभागेन महाकाव्यक्षेत्रे कस्याश्चित् नूतनायाः कलापक्ष-प्रधानतायाः परिपाट्याः प्रवर्तनम् समारब्धम्। अस्याः एव परिपाट्याः अनुसरणं अन्यैः परवर्तिभिः माघादिभिः कविवरैः अपि अङ्गीकृतम्। अस्यां शैल्यां काव्ये भाव-पक्षस्य स्थाने कलापक्षस्य प्राधान्यं वर्तते। अस्यां पद्धतौ यादृशं ध्यानं आलंकारिकतां प्रति प्रदीयते न तादृक् रसं भावं प्रति प्रदर्श्यते। किमपि सूक्ष्मातिसूक्ष्मं वृत्तमादाय महाकाव्यस्य प्रणयनं क्रियते। कालिदासस्य रचनासु भावपक्षस्य कलापक्षस्य च समन्वयः विलोक्यते अतः तस्य महाभागस्य प्रसादगुणः न कदापि अपह्रियते, तस्य रस-परिपाके न कोऽपि अवरोधः जायते। तथापि भारविः सर्वथा प्रचलितेषु शब्देष्वपि अत्यधिकं भावं सन्निवेष्टुं समर्थं इति तु न विवदनीयम्। अनेन महाकविना स्वकीयस्य विविधविषयसम्बन्धिनः कस्यचित् अगाधस्य ज्ञानस्य परिचयोऽपि स्वकाव्ये प्रदत्तः। अत्र नीतिशास्त्रम्, राजनीतिः, प्रकृतिचित्रणम्, व्याकरणं, काव्यशास्त्रं तु प्रदत्तमेव, एतैः

सह भावगाम्भीर्यं, अलंकाराणां समायोजनमपि प्रदत्तम्। भारविः न्यूनतमैः शब्दैः अधिकाधिकं भावं प्रकटयितुं क्षमः। अर्थगाम्भीर्याय कृते सः कीदृशः सावधानः तत्परश्च आसीत् इति तु तस्यैव उक्त्या प्रकटीक्रियते—किराते भीमस्य कथनस्य सराहनां कुर्वता युधिष्ठिरेण प्रोच्यते—

स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥

केन रूपेण वाणी सार्थिका भवति इत्यस्य प्रमाणमपि तस्यैव उक्त्या क्रियते—

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती॥ १२/३

न केवलं अयं श्लोकः तस्य अर्थगाम्भीर्यं प्रकटयति अपि तु पदे पदे अस्य काव्ये अर्थगौरवं विद्यते। इदं सर्वं विलोक्यैव श्री मल्लिनाथ महाभागेन उक्तम्—

नारिकेल फलसम्मितं वचो भारवेः सपदि तद् विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥

अस्य समर्थनं कृतं श्रीमद्भिः कृष्णमहाकविभिः स्वीये भरतचरिते—

प्रदेश वृत्यापि महान्तमर्थं प्रदर्शयन्ती रसमादधाना।
सा भारवेः सत्पथ दीपिकेव रम्याकृतिः कैरिव नोपजीव्या॥

कृष्णमहाभागानाम् अयमाशयः यत् सत्यपि अर्थगाम्भीर्ये तत्र माधुर्यं नापहीयते। महाकविना भारविना किराते विविधविषयाणां स्वकीयं ज्ञानं प्रदर्शितम् एतत् न तिरोहितं कस्यचित्—स नीतिज्ञः राजनीतिपटुरासीत्—

तेनोक्तम्—

क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः॥ १।४

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः॥१।३०

**तस्य प्रकृतिचित्रणमपि नोपेक्षणीयम्। तथाहि—**

निरीक्ष्यमाणा इव विस्मयाकुलैः पयोभिरुन्मीलितपद्मलोचनैः।
हृतप्रिया दृष्टि विलासविभ्रमा मनोऽस्य जह्रुः शफरी विवृत्तयः॥४।३

कपोल संश्लेषि विलोचनत्विषा विभूषयन्तीमवतंसकोत्पलम्।
सुतेन पाण्डोः कलमस्य गोपिकां निरीक्ष्य मेने शरदः कृतार्थता॥ ४।६

मृणालिनीनामनुरञ्जितं त्विषा विभिन्नमम्भोजपलाशशोभया ।
पयः स्फुरच्छालिशिखापिशङ्गितं द्रुतं धनुष्खण्डमिवाहिविद्विषः ।। ४/२७

मुखैरसौ विद्रुमभङ्गलोहितैः शिखाः पिशङ्गी कलमस्य बिभ्रती ।
शुकावलिर्व्यक्तशिरीषकोमला धनुःश्रियं गोत्रभिदोऽनुगच्छति ।। ४/३६

विततशीकरराशिभिरूच्छ्रितैरुपलरोधविवर्तिभिरम्बुभिः ।
दधतमुन्नतसानु समुद्धतां धृतसितव्यजनामिव जाह्नवीम् ।। ५/१५

रुचिरपल्लवपुष्पलतागृहैरुपलसज्जलजैर्जलराशिभिः ।
नयति सन्ततमुत्सुकतामयं धृतिमतीरुपकान्तमपि श्रियः ।।

तस्य अलंकारयोजना वस्तुतः सर्वान् अन्यान् गुणानतिशेते—
तथाहि—

(i) न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ।। १५/१४

(ii) देवाकानिनि कावादे वाहिकास्व स्वकाहि वा ।
काकारेभभरे काका निस्वभव्यव्यभस्वनि ।। १५/२५

तस्य सूक्तयस्तु विश्वविदिताः—तथाहि—

( i ) हितं मनोहारि च दुर्लभं वचः ।
( ii ) सुदुर्लभाः सर्वमनोरमा गिरः ।।
(iii) वसन्ति हि प्रेम्णि गुणा न वस्तुषु ।
(iv) प्रभवन्त्वभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ।
(अभिमानशालिनां मदावरोधाय ऐश्वर्यमेव समर्थम्)
( v ) सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
( vi ) वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ।
(vii) भवन्ति भव्येषु हि पक्षपातः ।
(viii) विश्वासयत्याशु सतां हि योगः ।।

अनेन एतत् तु सुनिश्चितं जायते यत् भारविः अनुभवशीलः स्वाभिमानी कविरासीत् । युधिष्ठिरं प्रति भीमस्य द्रौपद्र्याश्च वचनानि तस्य स्वाभिमानं सम्यक्

सूचयन्ति । तेन सर्वदा मर्यादायाः पालनमपि कृतं, वनेचरस्य वर्णने सर्वं मर्यादानुकूलमेवाभिहितम् । वस्तुतः भारविः स्वकीयं मतं महत्या युक्त्या पुरस्थापयति, अपरेषां युक्तीनां खण्डनं च करोति । अतः बृहत्त्रय्याम् किरातार्जुनीयम् अन्यतमः ग्रन्थः गण्यते ! सकले संस्कृतसाहित्ये एतादृशमोजोगुणसमन्वितं काव्यं न दृश्यते ।

—:: ::—

## १३. बाणोच्छिष्टं जगत्सर्वम्

सहृदयहृदयानंदजननी, काव्यवैभवनिदर्शनी, रसभावनिर्झरिणी (कादम्बिनी) कादम्बरी कस्य मनः न मदयति । गद्यरूपमपीदं काव्यं स्वविलासेन पद्यकाव्यात् प्रचुरतरं आह्लादं कस्य हृदये न जनयति । सुरभारतीवाङ्मयस्य अप्रतिमरत्नस्य बाणस्य कृतिरियम् मोहयति जगत् सकलम् । गद्यलेखने तु सविशेषमियं सर्वातिशायिनमामोदं वितरति । अस्य महाकवेः विविधेषु वर्णनेषु अपूर्वं वैशारद्यं विलोक्य को न जातः मन्त्रमुग्धः, को न वा अनुभवति तस्य माधुर्यम् । वस्तुतः संस्कृतसाहित्ये यादृशी प्रचुरता कवीनां दृश्यते न तादृशी गद्यलेखकानाम् । बाण महाभागः प्राधान्येन गद्यकाव्य कविरासीत् परं हर्षस्य विषयः यदस्य जीवनविषये न कापि अनिश्चितता संदिग्धता वा वर्तते । अयं महाभागः परमविख्यातस्य नृपस्य हर्षस्य सदसः कविरासीत् । तेन स्वयमेव स्वकीयस्य हर्षचरितस्यादौ स्ववंशविवरणं विस्तरेणोल्लिखितम् । परं बाणस्य ख्यातिः वस्तुतः तस्य कादम्बरीमाश्रिता । संस्कृतवाङ्मये गद्यकाव्यस्य सर्वथा अभावः किन्तु ये केऽपि अस्मिन् क्षेत्रे स्वीयां प्रतिभां प्रादर्शयन् ते कविभ्यः प्रशस्यतराः मूर्धन्याः जाताः । एकाकी बाणः एव स्वकीयेन रचनागाम्भीर्येण गद्यकाव्यापूर्तिं कर्तुं क्षमः, यथोक्तम् —

वीणापाणिपरामृष्ट वीणानिक्काणहारिणीम् ।
भावयन्ति कथं वान्ये भट्टबाणस्य भारतीम् ॥

एवमनेके विपश्चितः अमुं स्वीयया विलक्षणया दृष्ट्या व्यलोकयन् - यथा— "हृदयवसतिः पञ्चबाणस्तु बाणः" जयदेवः—

**अपरमपि विलोकनीयम्**

श्लेषे केचन शब्दगुम्फविषये केचिद् रसे चापरेऽ
लंकारे कतिचित्तदर्थविषये चान्ये कथावर्णने ।

आः सर्वत्र गभीरधीर कविता विंध्याटवी चातुरी—
संचारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ।।

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूव ह ।।

बाणमहाभागः वर्ण्यस्य वस्तुनः अणुमात्रमपि न प्रजहाति। स एतादृशानि व्यापकानि, मनोहराणि, भावपूर्णानि वर्णनानि अकरोत् येन उच्यते—

"बाणोच्छिष्टं जगत्सर्वम् ।

अयं महाभागः बाल्यकाले स्वच्छन्दः व्यहरत् किन्तु तस्मिन् विहरणेऽपि स्वकीयया प्रतिभया अनेन महान्तमः ज्ञानराशिः अधिगतः, अस्य भ्रमणस्य बलेनैव स्वीयासु रचनासु तेन अलौकिकाः मौलिका अनुभवाः प्रदत्ताः तेन नानारसपरिपाक-पुष्टा विविधालंकारसमलंकृता रचना प्रस्तुता या साहित्यसेविनां मनांसि सततं मोदयति ।वस्तुतः तेन स्वीया सर्वातिशायिनी काव्यप्रतिभा प्रदर्शिता। संस्कृतसाहित्ये गद्याभावः तावत् न क्लेशयिष्यति साहित्यसेविनः यावत् तत्र विलसति कादम्बरी।

एतत् तु सुस्पष्टमेव यत् पद्यरचनायाः गद्यरचना दुरूहतरा, पद्यरचनायां यत्र तत्र उक्तिवैचित्र्याद् रचना मनोज्ञा जायते किन्तु गद्यरचनायाः यादृशी प्रौढिः प्रारम्भे प्रदर्श्यते चेत् न तादृशी सम्पूर्णग्रन्थे परिलक्ष्यते, ग्रन्थस्य सम्मानः न भवति। गद्य-रचनायां तु पदे पदे वाग्वैलक्षण्यं, भाववैभवं तथा कल्पनानैपुण्यं अपरिहार्यम्। अतो हि उच्यते—

**'गद्यं कवीनां निकषं वदन्ति"** अस्य कृतयः निःसन्देहं गद्यकाव्यस्य चरमोत्कर्षं प्रदर्शयन्ति। ग्रन्थद्वयमेव तस्य वास्तविकः निधिः—हर्षचरितं—कादम्बरी चेति- इमे एव प्राधान्येन तस्य कृती स्वीक्रियेते मनीषिभिः । तत्र सन्ति अन्या अपि किन्तु तास्तु विवादग्रस्ताः। उभयोः ग्रन्थयोः अनेके प्रसङ्गाः सारगर्माः, सरसाः—यथा—हर्षचरिते—प्रभाकरवर्णनम्, यशोवत्याः वर्णनम्, सिंहनादस्य उपदेशः, दिवाकरमित्रस्य राज्यश्रीसांत्वनम्, कादम्बर्याम् तु तस्य गौरवगरिमाहर्षचरितम् अपि अतिशेते। यथा—प्रभातवर्णनम्, शबरसेनापतिवर्णनम्, हारीतवर्णनम्, विंध्याटवीवर्णनम्, जाबालिवर्णनम् संध्यावर्णनम् अच्छोदसरोवरवर्णनम्, महाश्वेतवर्णनम्, कादम्बरी वर्णनम्। कादम्बर्यां न जाने कियन्ति विशदानि मनोहराणि वर्णनानि सन्ति । तत्र विविधानि नदीवनसरोवरनगरचन्द्र धूलिपटलराजकुलानि वर्णितानि।

हर्षचरिते प्रदत्तेन वृत्तेन ज्ञायते यद् बाणस्य एकः पूर्वजः कुबेरनामा संस्कृत पण्डितः आसीत् । कुबेरस्य पौत्रः अर्थपतिः बाणस्य पितामहः, बाणस्य जनकः चित्रभानुः च तस्य जननी राज्यदेवी आसीत् । शैशवे एव बाणः अभिभावकविहीनः संजातः, अतः तस्य प्रारम्भिकः समयः न सुव्यवस्थितः व्यतीतः । तथापि अनेन महाभागेन हर्षस्य राज्यसभा समासादिता यत्र स्वकीयस्य वैदुष्यस्य प्रभावेण स प्रारम्भिकं कलंकं क्षालयितुं समर्थः जातः । तत्रैव अनेन हर्षचरितस्य प्रणयनमकरोत् यस्मिन् महाराजस्य हर्षस्य जीवनवृत्तमस्ति । इतः परं तेन कादम्बरी विरचिता, या एका कविकल्पना जनिता प्रेमकथा एव । कादम्बर्या एव तस्य कीर्तिसौरभं चतुर्दिक्षु प्रसृतम् । अनेन महाभागेन स्वकीयायाः लेखनशैल्याः आदर्शः हर्षचरिते प्रकटितः—

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।<br>
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥

अनेनैव आदर्शेन निबद्धः सः स्वकृतिषु गुंफितशैल्याः परिचयं प्रयच्छति । तस्य गद्य शैली पाञ्चली इति ज्ञायते—

**शब्दार्थयोः समोगुम्फः पाञ्चाली रीतिरिष्यते ।** बाणेन कस्याश्चित् अपूर्वस्याः शैल्याः स्वरूपं उपस्थापितं यत्र तेन एकतः दीर्घाणि समस्तपदयुक्तानि वाक्यानि विलिखितानि, अपरतः अत्यन्त लघूनि वाक्यानि समुपस्थापितानि । तस्य वर्णनेषु प्रत्येकं स्थले भाषा विषयानुरूपिणी । एकतः स केषांचित् भयंकराणां विकटानां वर्णनानां कृते कठोरवर्णा—अपरतः रमणीयस्य कस्यचित् वर्णनस्य कृते सरलां, सुमधुरां, लघुवाक्योपेतां कोमलां पदावलीं प्रयुंक्ते । पदे पदे तस्य भाषायां प्रकृतिचित्रणं, वस्तुनिरूपणं, अलंकाराः रसाभिव्यक्तिः, चरित्रचित्रणश्च समुपलभ्यन्ते । यथा—प्रकृति चित्रणं ।

"एकदा तु प्रभातसंध्यारागलोहिते गगनतलकमलिनीमधुररक्तपक्षसंपुटे वृद्ध हंस इव मन्दाकिनीपुलिनादपरजलनिधितटमवतरति चन्द्रमसि..........संध्यामुपासितुमुत्तराशावलम्बिनि मानससरस्तीरम् इवावतरति सप्तर्षिमण्डले.......इतस्ततः संचरत्सु वनचरेषु ।

विजृम्भमाणे श्रोत्रहारिणि पम्पासरः कलहंसकोलाहले—क्रमेण च गगनतल मार्गमवतरतो दिवसकरवारणस्य अवचूलचामरकलाप इव उपलक्ष्यमाणे मञ्जिष्ठरागलोहिते किरणजाले शनैः शनै रुदिते भगवति सवितरि—

वस्तुनिरूपणे स विचित्रं शव्दगाम्भीर्यमवलम्ब्य स्वकीयं कौशलं दर्शयति—यथा—

कर्ता महाश्चर्याणां, आहर्ता क्रतूनां, आदर्शः सर्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानां, आगमः काव्यामृतरसानाम्, उदयशैलो मित्रमण्डलस्य, उत्पातकेतुरहितजनस्य—

(ii) अच्छोदवर्णनम्—प्रविश्य च तस्य तरुखण्डस्य मध्यमागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः, निर्गमनमार्गमिव सागराणां, निस्यन्दमिव दिशां, अंशावतारमिव गगनतलस्य, तुषारगिरिमिव विलीनम्, चन्द्रातपमिव रसतामुपेतम् ।

(iii) तस्य अलंकारेषु उपमारूपकोत्प्रेक्षाविरोधभासपरिसंख्या—श्लेषादयः तस्य प्रियाः अलंकाराः–तत्रापि विरोधाभासः सविशेषं—यथा—

**परिसंख्या**–यस्मिश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसंकराः, रतेषु केशग्रहाः, काव्येषु दृढवन्धाः, शास्त्रेषु चिन्ता ।

**विरोधाभासः**—आयतलोचनमपि सूक्ष्मदर्शनम्, महादोषमपि सकलगुणाधिष्ठानम्, कुपतिमपि कलत्रवल्लभम्, अत्यन्तशुद्धस्वभावमपि कृष्णचरितम् ।

**श्लेष**—उत्कृष्टकविगद्यमिव विविधवर्णश्रेणिप्रतिपाद्यमानाभिनवार्थ संचयम्, नाटकमिव पताकाङ्कशोभितम्, पुराणमिव विभागावस्थापितसकलभुवनकोशम्, व्याकरणमिव प्रथममध्यमोत्तमपुरुष विभक्तिस्थितानेकादेशकारकाख्यातसंप्रदानक्रियाव्ययप्रपंचसुस्थितम् ।

**उत्प्रेक्षा**—अपरसागराम्भसि पतितेदिनकरे पतनवेगोत्थितमम्भः सीकर निकरमिव तारागणमम्बरमधारयत् ।

**लघुवाक्यानि**—न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन् , न मानयन्ति मान्यान्, नार्चयन्ति अर्चनीयान्,........

हा हतोऽस्मि, हा दग्धोऽस्मि, हा वञ्चितोऽस्मि, हा किमिदमापतितम् किं वृत्तम्—अतः बाणस्तु बाण एव ।

———

# १४. कारुण्यं भवभूतिरेव तनुते

वेदशास्त्रपारगेन, परमकारुणिकेन वाग्विभूतिना भवभूतिना करुणरसे जगत् अद्यापि तथैव निमज्जितं प्रतीयते यथा तस्य काले जातं स्यात्। सर्वप्रथमं महाकविना वाल्मीकिना प्रसृतं कारुण्यं इह जगतीतले किन्तु तेन श्रुतं काव्यं प्रणीतं न तु दृश्यं। ततः परं भासकालिदासशूद्रकादिना मनोहराणि नाटकान्यपि विरचितानि परं न केनापि तादृशं करुणरसप्राचुर्यं प्रवाहितं यादृशं महता नाटककारेण भवभूतिना स्वीये उत्तर-रामचरिते। भवभूतिस्तु भवभूतिरेव। यद्यपि भवभूतिना स्वीयासु रचनासु अन्येषां रसानां भावानाञ्च अभिव्यञ्जना महता साफल्येन विहिता तथापि अनेन महाभागेन करुणरसस्य यादृशः परिपाकः, यादृशं तन्नैपुण्यं प्रदर्शितं न शक्यते केनापि अन्येन विधातुम्। भवभूतिः करुणम् एव प्रधानं रसं स्वीकरोति अन्यान् रसान् तस्य अङ्गी-भूतान् आकलयति यथोक्तम् तेन उत्तररामचरिते नाटके—

एको रसः करुण एव निमित्तभेदाद्<br>
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।<br>
आवर्त बुद्बुद् तरंगमयान् विकारान्<br>
अम्भो यथा सलिलमेव हि तत्समस्तम्॥ ३/४७

यथा जलं मूलतः एकम् एव भवति किन्तु निमित्तभेदात् आवर्तबुद्बुदतरंगाणां विकाराणां स्वरूपे परिणमते तथैव भवभूतिमते मूलतः एकः एव रसः करुणः यः अन्येषां रसानां माध्यमेन परिलक्ष्यते। वस्तुतः प्राचीना उक्तिः सत्यम्—उत्तरेरामचरिते तु भवभूतिर्विशिष्यते।

उत्तररामचरितस्यनाटकस्य प्रथमे अङ्के एव यदा रामः चित्रवीथ्यां अतीतस्य चित्राणि विलोकयति तदैव भवभूतिः अतिनैपुण्येन करुणायाः बीजं वपति। रामभद्रः तत्र समागतानाम् अतीतवृत्तानां स्मृत्यैव न केवलं स्वयं व्यथयति अपितु पाठकान् विकलयति, दर्शकानाञ्च हृदयेषु जनयति कारुण्यम्। स कथयति—

जीवत्सु तातपादेषु नूतने दारसंग्रहे।<br>
मातृभिश्चिन्त्यमानानां ते हि नो दिवसाः गताः॥ उ० रा० १/१९

अत्रैव सीताहरणचित्रंप्रदर्शयन् लक्ष्मणोऽपि व्यथयति—

अथेदं रक्षोभिः कनकहरिणच्छद्म विधिना।<br>
... वृत्तं पापैर्व्यथयति यथा क्षालितमपि॥

जनस्थाने शून्ये विकलकरणैरार्यचरितैः ।
अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ।।

उत्तररामचरितस्य तृतीयाङ्के भवभूतिः एकं विलक्षणं चमत्कारं प्रदर्शयति, एकतः रामः पञ्चवट्यां स्वीयानि परिचितानि स्थानानि विलोक्य विलपति, स सीतायाः अभावेन दुःखितः सन् मूर्च्छितः जायते, अपरतः तत्रैव छायासीता रामस्य स्नेहमयं स्मरणं विलोक्य आत्मानं धन्यां मन्यमाना अदृश्या एव तस्यस्पर्शसुखमनुभवति च तस्मै सुखं प्रयच्छति । अत्र वनवासं प्रदाता रामः सीतायै येन रूपेण विलपति तेन वस्तुतः कविः सीतायाः अपमानितं हृदयं शमयति ।

इदं सर्वं विलोक्य उक्तं केनापि—

जडानामपि चैतन्यं भवभूतेरभूत् गिरा ।
ग्रावाप्यरोदीत् पार्वत्याः हसतःस्म स्तनावपि ।।

लोकाराधनाय स्वप्रियतमां प्रवास्य लोकाभिरामः रामः केन प्रकारेण स्वीयेन हृदयोद्वेगेन विह्वलः जायते यत् तस्य विलापेन दर्शकाः अपि विह्वलाः जायन्ते । रामः कथयति --

हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः ।
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा ।
विष्वङ् मोहः स्थगयति कथं मन्द भाग्यः करोमि ।।

दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते ।
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात् ।
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ।।

एतत् सर्वं विलोक्य दर्शकः विस्मरति यत् स नाटकं विलोकयति । का कथा दर्शकानां हृदयस्य, रामस्य करुणक्रन्दनं श्रावं श्रावं न केवलं सचेतनाः प्राणिनः द्रवन्ति अपि तु वज्रोऽपि द्रवति । एतदेव भवभूतेः साफल्यं, एतदेव तस्य कास्यम् । भवभूतिना मानवस्य आन्तरिकीं कोमलां ग्रंथिं संस्पृश्य अलौकिकं काव्यं प्रस्तुतम् । एतादृशं नाटकं अन्यासु भाषासु अपि दुर्लभम् ।

अनेन महाभागेन स्वनाटकानां प्रस्तावनासु स्वीयः परिचयः प्रदत्तः, तदनुसारं अयं वर्तमान वरार इति नामकस्य प्राचीन विदर्भदेशस्य पद्मपुर स्थानस्य वास्तव्यः आसीत् । अयं उदुम्बरवंशीयः ब्राह्मणः । अस्य पितामहः श्री भट्टगोपालः, जनकः श्रीनीलकण्ठः मातुर्नाम जतुकर्णी आसीत् । कल्हणस्य राजतंरगिण्या ज्ञायते यदयं कान्यकुब्ज नृपतेः यशोवर्मणः आश्रितः आसीत् । अतोऽस्य स्थितिकालः ६५० ईसवीतः ७५० ई० पर्यन्तम् अनुमीयते विपश्चिद्भिः । विशेषरूपेण तस्य कारणं यत् सप्तम शताब्द्याः पूर्वार्द्धे स्थितेन बाणेन अस्य चर्चा न कृता । परं ८०० ई० लिखिते स्वकीये काव्यालंकार सूत्रे वामनेन उत्तररामचरितस्य "इयं गेहे लक्ष्मी" इति श्लोकः उद्धृतः ।

शिवभक्तः, उद्भटः वेदशास्त्रपारंगतः भवभूतिः लब्धकीर्तिः नाटकप्रणेता आसीत्, किन्तु तस्य कीर्तिः उत्तरभारते विलम्बेन प्रसृता इति प्रतिभाति । तस्य ग्रन्थत्रयं मालतीमाधवम्, महावीरचरितम्, उत्तररामचरितम् तस्य कीर्तिकौमुदीं प्रसारयितुं अलम् । उक्त नाटकेषु "महावीर चरितम्" तस्य प्रथमं नाटकं प्रतिभाति, अस्मिन् सप्त अंकाः सन्ति, येषु रामायणस्य कथा प्रारम्भतः रामस्याभिषेक पर्यन्तं प्रदत्ता । तस्य द्वितीयं नाटकं मालती माधवम् अस्ति यस्मिन्दश अंकाःसन्ति एषु मालत्याः माधवस्य च प्रणयगाथा वर्णिता । तस्य तृतीयं नाटकम् उत्तररामचरितम् उत्कृष्टतमं वर्तते ।

कला दृष्ट्या तस्य प्रथमं नाटकं न प्रशस्यं मन्यते–किन्तु उत्तररामचरितम् करुणायाः साक्षात् प्रतीकम् इदं । सर्वथा अभिनेयम् अतः भवभूतिः करुणरसविशिष्टः कविः आसीत् । अतः तस्य नाट्यकलायाः उन्मुक्तं स्वरूपं नैव प्राप्यते । । भवभूतेः कवित्वं प्रशस्यतरं वर्तते, न तावत् तस्य नाटकत्वम् । तस्य नाटकेषु काव्यकलायाः पक्षः बलीयान्, तस्य काव्येऽपि भावपक्षस्य प्राधान्यं वर्तते, यद्यपि भारवेरनन्तरं भावपक्षस्य अपेक्षया कलापक्षस्य प्राधान्यमायातम्, तथापि अस्मिन् प्रसङ्गे भवभूतिः स्वकालप्रभावाद् उन्मुक्तः प्रतीयते ।

तस्य काव्ये विभिन्नानां रसानां भावानाञ्च अभिव्यक्तिः दृश्यते किन्तु कारुण्ये तेन अश्रुतपूर्वं नैपुण्यं प्रदर्शितम् इति न तिरोहितं कस्यचित् । करुणरसस्य प्रतिपादने भवभूतिना अलौकिकाः उपमाः विन्यस्ताः किन्तु तस्य अलंकाराः रसानुगामिनः एव । स्थाने स्थाने तस्य भाषायां दर्शनशास्त्रस्य पारिभाषिकाः शब्दाः अपि एतादृश्या स्वाभाविकरीत्या प्रयुक्ताः यत् नाटककर्तुः तैः सह सततं चिन्तनं सुस्पष्टम् । भवभूतिः स्वयं गम्भीरस्वभावशीलः आसीत् । तेन स्वीयया अनुभूत्या संसारे विषमः विषादः

विलोकितः । तेन मूर्तपदार्थाः अमूर्तैः सह तुलनायां संस्थापिताः, अमूर्ताश्च कारुण्येन द्रविताः प्रदर्शिताः । चरित्रचित्रणे स विशेषरूपेण पटुः दृश्यते । यः रामः नृपत्वेन स्वीयां प्रियतमां जनहिताय सहर्षं त्यक्तुं क्षमः, स एव मानवरूपेण सीतायै भृशं विलपति । यः लक्ष्मणः भ्रातुराज्ञां शिरोधार्यं विवशः सन् सीतां वने विसृजति स एव तस्यै भृशं रोदिति । भवभूतिना यया स्वाभाविक्या रीत्या सर्वं विनिवद्धं तत् वस्तुतः सिद्धहस्तेनैव सम्भाव्यम् । अतो हि भवभूतिः संस्कृतसाहित्ये व्याकरण्यस्य मूर्तिः करुणायाश्च प्रतीकम् ।

—: ::—

## १५ वसन्तर्तुः

सुरासुरैः समुपासितायां विविधभूभागैराकलितायां, विशदायां, भारतवसुन्धरायां विलसन्ति प्रतिवर्षं पर्यायेण यथाकालं षड्ऋतवः । सामान्यतया इमे सर्वे एव येन केनचिद् रूपेण सर्वहितसाधकाः जनमानसानन्दप्रदाश्च भवन्ति, किन्तु एषु ऋतुषु समेषां लोकानां अभीप्सितः सर्वाह्लादकरः कुसुमाकरः ऋतुराजः प्राधान्येन राजते ।

ऋतुराजः शिशिरानन्तरमागत्य वसुधायाः शैत्यं हरति । अस्मिन् ऋतौ धनधान्यादिभिरलंकृता वसुमती आमोदयति जनान् यतः अस्मिन् समये न ग्रीष्मवत् तपति वसुन्धरा न वा वाति सन्तापजनकः समीरणः, न वर्षावद् इदानीं भवति क्लिन्नं वसुधातलं, न वा जायते मलिनं सलिलम् अथवा दूषितं वायुमण्डलम् । अस्मिन् ऋतौ शीतलः सुरभिश्च पवनः द्रुमाणां छायायां विश्रम्य विश्रम्य मन्दं मन्दं सरति । वस्तुतः पत्रपुष्पविरहिताः तरवः लताश्च परमरमणीये वसन्ते नवनवैः सुकोमलैः किसलयैः समलंकृताश्च जायन्ते । इदानीं विविधवर्णानि कुसुमानि विकसन्ति । पीतपुष्पैः युक्ताः सर्षपाः कृषकाणां मनांसि हरन्ति । मोदमानाः कृषकाः श्रमसाध्यं स्वीयं फलान्वितं सस्यं विलोक्य विस्मरन्ति शैत्यं दुःखं श्रमञ्च । अस्मिन् ऋतौ लताकुञ्जेषु सरागं कूजन्ति विहगाः । अथ च विमलजलानां सरितां तटेषु, सुरम्येषु आरामेषु, कलकलनिनादपूर्णेषु निर्झराणां कूलेषु विचरन्ति पशवः विहरन्ति च मानवाः । मञ्जर्युपेतेषु सहकारविटपेषु कूजन्ति कोकिलाः । किं बहुना प्रकृतिः स्वयं काञ्चित नवीनामलौकिकीं शोभां दधाति । मानवेषु नवोल्लासः समायाति । नवीना चाशा सर्वत्र परिलक्ष्यते ।

बालकाः बालिकाश्च अस्मिन् समये सर्वत्र पीतत्वं निरूप्य स्वीयानि वस्त्राणि

पीतानि रञ्जयन्ति । अतो हि अयं ऋतुः कवीनां परमः प्रेयान् । तैरयं विविधरूपैः उपवर्णितः ।

तथाहि—त्रिगुणोपेतेन माघेन एवं स्वीयेन काव्यरसेन अग्रमभिनन्दितः—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपंकजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिंसुरभिं सुमनोभरैः ।।

वस्तुतः मन्दं मन्दं सरन्तं, सुरभिसम्पत्तिं वहन्तं समीरणं संस्पृश्य नवनवाभिः मञ्जरीभिराकलितान् सहकारविटपान् विलोक्य मधुमधुरं कोकिलकूजितं श्रुत्वा कस्य सचेतसश्चेतो न प्रमुदितं जायते । कस्य मनो न हरति ऋतुराजः । का कथा गृह-स्थानां संयमिनाम् अपि धैर्यं विनश्यति । यथोक्तं कालिदासमहाभागेन—

द्रुमाः सपुष्पाः सलिलं सपद्मं,
स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषाः दिवसाश्च रम्याः
सर्वंप्रियं चारुतरं वसन्ते ।।

—:: ::—

## १६ ग्रीष्मर्तुः

यथा लोके सुखानि दुःखानि च चक्रनेमिक्रमेण आयान्ति यान्ति च तथैव भारते षड् ऋतवः आयान्ति । मानवोऽपि स्वभावेन सदा एकस्मिन् वायुमण्डले नैव स्थातुं वाञ्छति । अस्मिन्नेव क्रमे अतः वसन्तस्यावसाने समायाति प्रचण्डतपनतापितो भीष्मो ग्रीष्मः । ग्रीष्मस्य आरम्भः वस्तुतः शैत्यं हरति किन्तु अस्य यौवनं सन्तापयति लोकान् । सामान्यरूपेण उष्णत्वमेव जीवनम्, अस्याभावे न किमपि जीवितुं पारयति किन्तु अस्याधिक्यं नैव स्पृहणीयम् । लोके यदा शीताधिक्यं जायते जनाः ग्रीष्मं स्मरन्ति । सर्वे अभिलषन्ति यद् ग्रीष्मः शीघ्रम् एव आगच्छेत् किन्तु आगते प्रचण्डे ग्रीष्मातपे ते पुनः शैत्यम् अन्वेषयन्ति ।

वस्तुतः ग्रीष्मर्तुः भारताय प्राणदः भवति । अस्मिन्नेव ऋतौ मेघाः समुद्रात् जलं गृह्णन्ति, अस्मिन्नेव समये अनेके हानिप्रदाः कीटाणवः म्रियन्ते, वायुमण्डलं स्वच्छं, विशुद्धं च जायते । धनिकाः अस्मिन् ऋतौ सुखेन पर्वतीयेषु खण्डेषु विहरन्ति, मनोहराणि प्राकृतिकानि दृश्यानि विलोकयन्ति । ते जलेषु क्रीडन्ति । अस्मिन् ऋतौ जलावगाहनं तु विशेषेण आनन्दप्रदं, यथोक्तं महाकविना कालिदासेन—

सुभगसलिलावगाहाः पाटलसंसर्गसुरभि वनवाताः ।
प्रच्छाय सुलभनिद्रा दिवसाः परिणामरमणीयाः ॥

परम् अस्यापरोऽपि पक्षः । यदायं ऋतुः उग्रं स्वरूपं धारयति, यदा भानुः प्रचण्डत्वम् उपयाति, तदा वायुः उष्णतां वहति, प्रचण्डेन सूर्यातपेन प्रतप्ता धरा ज्वालान् मुञ्चति । सरितां सलिलानि शुष्यन्ति, दिनानि वृद्धिं गच्छन्ति, हरितत्वं विनश्यति, निदाघस्य भयंकरं स्वरूपम् उदेति, न कुत्रापि शैत्यमनुभूयते, पिपासाकुलाः पथिकाः, पशवः, विहगाश्च जलाय इतस्ततः पर्यटन्ति, सर्वे वारंवारं वर्षाकालं स्मरन्ति, विरलछायायां समाश्रयन्ति, प्रचण्डातपेन प्रतप्ताः पारावताः निराहाराः गवाक्षेषु तिष्ठन्ति । न जाने कियन्तः जनाः भीषणेनातपेन अकालं कालकवलिताः जायन्ते । स्वकीये ऋतुसंहारकाव्ये कालिदासेन अस्य ऋतोः समीचीनं स्वरूपं प्रदर्शितम् तथा हि—

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः, सदावगाहक्षतवारिसञ्चयः ।
दिनान्तरम्योऽभ्युपशान्तमन्मथो, निदाघकालोऽयमुपागत प्रिये ॥

मृगा प्रचण्डातपतापिताभृशं, तृषा महत्यापरिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता निरीक्ष्यभिन्नाञ्जनसन्निभं नभः ॥

खेर्मयूखैरभितापितो भृशं विदह्यमानः पथि तप्तपांशुभिः ॥
अवाङ्मुखोजिह्मगतिः श्वसन्मुहुः फणीमयूरस्य तलेनिषीदति ॥

तृषा महत्या हत विक्रमोद्यमः श्वसन् मुहुर्दूर विदारिताननः ।
न हन्त्यदूरेऽपि गजान् मृगेश्वरो विलोलजिह्वश्चलिताग्रकेसरः ॥

—:: ::—

## १७ वर्षर्तुः

यदा प्रखरेण निदाघेन प्राणधारणं दुष्करं भवति, यदा सूर्यस्य प्रचण्डाः किरणाः धरातलं भस्मसात् इव कुर्वन्ति, यदा जलाशयाः शुष्यन्ति, पादपाः लताश्च हरितपत्र-रहिताः जायन्ते, यदा मानवाः, पशवः, पक्षिणश्च भीषणेन ग्रीष्मेण संत्रस्ताः जायन्ते, यदा सर्वत्र सूर्याग्निः प्रतपति, प्रसृतं च भवति, तदैव निदाघस्य उष्णत्वहारकः, जन-सुखदायकः वर्षर्तुः समायाति । अस्मिन् ऋतौ दयालवः जलपूरिताः जलदाः वसुधायाः पिपासां स्वीयेन मधुरेण जलेन शाम्यन्ति । ते वसुमत्यां वसून् उत्पादयन्ति, सस्यान् हरितान् कुर्वन्ति ।

पावने वर्षर्तौ सिञ्चितायाः धरायाः तलं हरितं जायते, सरितः, सरांसि जलैः आपूरिताः संजायन्ते, अहर्निशं वारिधाराः निपतन्ति, वृक्षाः लताश्च हरिताः कुसुमान्विताः विलसन्ति । अस्मिन् ऋतौ सजलानां जलदानां मन्द्रं गर्जनम् आकर्ण्य मत्ताः मयूराः इतस्ततः नृत्यन्ति, प्रमुदिताः प्लवंगमाः निजशब्दैः जलाशयान् दिग्दिगन्तरान् च आपूरयन्ति । इदानीं हरितां शाटिकां दधाना सुसज्जिता धरा नववधूरिव शोभते, प्राणिनः सुखं सन्तोषं चानुभवन्ति । मोदमानाः कृषकाः क्षेत्राणि कर्षन्ति, नीललोहिते गगने विविधवर्णाः मेघाः विचरन्ति, प्रसन्नाः खगाः, लतासु, पादपेषु कुञ्जेषु सानन्दं कूजन्ति । ते स्वच्छन्दतया जलाशयेषु उच्छलन्ति, क्रीडन्ति, ऐन्द्रचापं दिग्भागान् विविधवर्णैः रञ्जयति, सर्वत्र शाद्वलस्थलानि भूमिम् आच्छादयन्ति ।

वस्तुतः वर्षर्तुः निदाघस्य उष्णत्वं हरति, सर्वत्र हरितं सस्यं विलोक्य जनमानसं प्रसीदति । जनाः नभो मण्डले अभ्रमालां निरूप्य अमन्दमानन्दमनुभवन्ति । महाकविना महर्षिणा वाल्मीकिना अस्य ऋतोः अतीव मनोहारकं वर्णनं कृतम्, तथाहि—

मेघ कृष्णाजिनधरा धारा यज्ञोपवीतिनः ।
मारुतपूरितगुहाः प्राधीताः इव पर्वताः ॥

रजः प्रशान्तं सहिमोऽद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान् ॥

व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति ॥

समुद्वहन्तं सलिलातिभारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृंगेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥

वलेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ।
गात्रानुवृत्तेन शुकप्रभेण नारीव लाक्षोक्षित कम्बलेन ॥

अङ्गार चूर्णोत्कर सन्निकाशैः, फलैः सुपर्याप्त रसैः समृद्धैः ।
जम्बू द्रुमाणां प्रविभान्ति शाखा, निलीयमाना इव षट्पदौघाः ॥

तडित्पताकाभिरलंकृतानामुद्गीर्ण गम्भीर महारवाणाम् ।
विभान्ति रूपाणि बलाहकानां रणोद्यतानामिव वारणानाम् ॥

मुक्ता सकाशं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहंगाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥

षट् पादतन्त्री मधुराभिधानं, प्लवंगमोदीरितकण्ठतालम् ।
आविष्कृत्तं मेघमृदङ्ग-नादैर्वनेषु संगीतमिव प्रवृत्तम् ।।
प्रहृष्टसंनादित वर्हिणानि सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि गजाः सुरम्याणि वनान्तराणि ।।
नवाम्बुधाराहतकेसराणि, द्रुतं परित्यज्य सरोरुहाणि ।
कदम्ब पुष्पाणि सकेसराणि, वनानि हृष्टा भ्रमराः पतन्ति ।।
मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विक्रान्ततरा मृगेन्द्रा ।
रम्या नगेन्द्रा निभृतानरेन्द्रा प्रक्रीडितो वारिधरैः सुरेन्द्रः ।।

**किष्किन्धा काण्डे २८ सर्गः**

अनेन रूपेणायं ऋतुः अतीव लाभप्रदः । अस्मिन् ऋतौ धरातलस्य सर्वं कालुष्यं अचिरं विनश्यति । ग्रामाणां, नगराणां च सञ्चितं मालिन्यं वर्षाजलेन यथा दूरीक्रियते न तथा केनाप्यन्येनोपायेन । सुखप्रदेऽस्मिन् ऋतौ सर्वत्र प्रसन्नतायाः साम्राज्यं दरीदृश्यते । वालकाः वालिकाश्च श्रावणे दोलायां उद्दोलयन्ति, गायन्ति, नृत्यन्ति. मधुरेण संलपन्ति ।

**"अति सर्वत्र वर्जयेत्"** इति कृत्वा वर्षागमः यदा उग्रं स्वरूपं धारयति, वर्षा भयंकरी भवति, सप्तधासप्तवाता प्रताडिताः मेघाः घोरं गर्जन्ति, तडित् उद्घोषं करोति, वारिधाराभिः भूमिम् आप्लावितां कुर्वन्ति, नद्यः सवेगम् उच्छलन्ति, यत् किंचित् तासां सम्मुखम् आयाति तत् सर्वं समुद्राभिमुखं गच्छति, गृहाणि विनश्यन्ति, सर्वत्र जलम् एव दृश्यते, जलप्लावेन कृषकाः दुःखिनः जायन्ते, सर्वा वसुन्धरा जलमयी दृश्यते, गतागतमपि दुष्करं जायते, मार्गाः पंकिलाः जायन्ते, मानवाः संत्रस्ताः भवन्ति, मार्गेषु रात्रौ विविधाः सर्पादिकाः जीवाः परिभ्रमन्ति, सलिलं मलिनं भवति, वायुमण्डलं च दूषितं जायते, दैवाधीनं सर्वं भवति किन्तु अस्मादपि संकटात् उद्धारः भवति । भूमिः उर्वरा जायते, सस्यादिकं उत्पन्नं भवति । अतः लाभप्रदः एव वर्षर्तुः ।

———

## १८. शरद् वर्णनम्

"नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण" इत्युनुसारं भारतवर्षे यथा-कालं षड् ऋतवः प्रवर्तन्ते। अस्मिन् जगतीतले सन्ति अनेके देशाः यत्र एक एव ऋतुः प्रवर्तते, तत्र वर्षं यावत् समानः समयः, समं वायुमण्डलं तिष्ठति कस्मिश्चित् देशे सर्वदा भीषणमुष्णत्वम्, कस्मिश्चित् देशे प्राणहारकं शैत्यं प्रवर्तते किन्तु अस्माकम् अलौकिके दिव्ये च भारते षड् ऋतवः समुल्लसन्ति। एषु ऋतुषु शरद् ऋतुः वस्तुतः श्रेष्ठः यतः अस्मिन् नाधिकं शैत्यं, न चोष्णत्वं जायते। सर्वत्र मनोहारिणी, विलक्षणा प्राकृतिकी शोभा राजते।

व्यतीते वर्षाकाले समायाति नवधान्यदायिनी, विमलसलिलकारिणी, चारु-चन्द्रभासिनी, मानसोल्लासिनी, विकचपद्महासिनीयं शरत्। अस्मिन् ऋतौ निर्मलं गगनमण्डलं, धवलचन्द्रिकया धवलिताधरा, नवनवानामरविन्दानां परागः। मन्दं मन्दं गुञ्जन्तो भ्रमराः रञ्जयन्ति चेतांसि लोकानाम्।

वस्तुतः विगते वारिधरे, विमले गगनमण्डले, देदीप्यमानः सुधांशुः सुशीतलैः निजकरनिकरैः आनन्दयति जनान्। अस्मिन् ऋतौ वर्षा अवसानं गच्छति, धरा निर्मला जायते, नभीमण्डलं स्वच्छं भवति, रात्रौ विशेषरूपेण चन्द्रिकया चर्चिताः सर्वाः दिशः लोके प्रमोदं वितरन्ति, मार्गाः विगतपंकाः जायन्ते, जलाशयानाम् आविलत्वं निलीयते, इदानीं श्वेतानि कासपुष्पाणि वर्षायाः वार्धक्यं व्यज्जयन्ति, मानसमरालाः मानसात् पुनरागच्छन्ति। शरद् ऋतौ राकायां चन्द्रिकायाः धवलितया धवलिता धरा श्वेतच्छदावृता इव एकस्मिन् वर्णे अनुरञ्जिता प्रतिभाति।

शारदीयां राकायां भारते "ताज महल" इत्याख्यस्य भवनस्य सर्वलोकानन्द-कारिणी विमला श्वेतद्युतिः अपूर्वां, अश्रुतपूर्वां शोभां धारयति। अनेन आकृष्टाः वैदेशिकाः इदं भवनं अस्मिन्नेव ऋतौ विलोकयन्ति।

शरद् ऋतुः शुभान् सन्देशान् आनयति। नवसस्यशालिनी, शुभ्रवसनधारिणी, नूतनसुमनसौरभवाहिनी श्रमिकान्, कृषकान्, अन्यान् च जनान् आह्लादयति, समेषां प्राणिनां चेतांसि मोदयति, व्यापार वर्गेषु उल्लासं जनयति, भ्रमरेभ्यः विकसितानां जलजानां मधुवितरति। अयं ऋतुः कविभिः विविध रूपेण गीयते, तथाहि—

न तज्जलं यन्न सुचारु पंकजं,
न पंकजं तद् यदलीन षट् पदम्।

न षट्पदोऽसौ कलगुञ्जितो न यो,
न गुञ्जितं तन्न जहार यन्मनः ॥ भट्टिः

वाल्मीकि महाभागेन एवं अर्चितः अयं ऋतुः—

पाण्डुरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् ।
शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ।
दृष्ट्वा विमलं व्योम गत विद्युतवलाहकम् ।
सारसारवसंघुष्टंविललापार्तया गिरा ॥
निस्वनं चक्रवाकानां वापीः काननानि वनानि च ।
पुण्डरीकविशालाक्षी कथमेषा भविष्यति ॥

किष्किधा काण्डे ३०

कालिदास महाकविना निम्नलिखित रूपेण अयं वर्णितः ।

काशांशुका विकचपद्ममनोज्ञवक्त्रा,
सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालि रुचिरानतगात्रयष्टिः,
प्राप्ता शरन्नववधूरिव रूपरम्या ॥
काशैर्मही शिशिर दीधितिना रजन्यो,
हंसैर्जलानि सरितां कुमुदैः सरांसि ।
सप्तच्छदैः कुसुमभारनतैर्वनान्ता,
शुक्लीकृतान्युपवनानि च मालतीभिः ॥
मन्दानिलाकुलित चारुतराग्रशाखः,
पुष्पोद्गमप्रचयकोमलपल्लवाग्रः ।
मत्तद्विरेफ परिपीत मधुप्रसेकश्चित्तं,
विदारयति कस्य न कोविदारः ॥
शरदि कुसुम संगाद् वायवो वान्ति शीताः,
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः ।
विगत कलुषमम्भः श्यानपंकाधरित्री,
विगत किरणचन्द्रं व्योमतारा विचित्रम् ॥

ऋतुसंहारात्

———

## १९. यौतुकसमस्या

कान्तियुक्तानां, सरसानां, मदभराणां प्रमदानां प्रमादस्तु प्रसिद्ध एव किन्तु नैराश्यपूर्णां, दीनवदनां, सुशिक्षितां, विवाहयोग्यामपि अविवाहितां बालां विलोक्य कस्य मनो न दूयते । अद्यतने प्रगतिशीलेऽपि संकीर्णे हिन्दूसमाजे न जाने कियत्यः एतादृश्यः कन्याः स्वकीयां मनोव्यथाम् अकथयन्त्यः प्रत्यहं स्वजनकानां भारभूताः भवन्ति । कष्टं भोः यः पिता स्वदुहितुः कृते यौतुकं विना स्वल्पतमेन व्ययेन योग्यतमं वरं वाञ्छति स एव स्वपुत्राय विपुलं यौतुकम् अभिलषति । यौतुकं वस्तुतः समाजस्य एकं परिहार्यं कलङ्कम् ।

अस्माकं समाजे विवाहसंस्कारः एकः परमः पावनः संस्कारः मन्यते । अयं संस्कारः प्राचीनकालात् अद्यावधि अविच्छिन्नरूपेण प्रवर्तते । प्राचीनकाले उद्वाहसमये कन्यादानेन समं सामर्थ्यानुसारं किंचित् दानं, स्वल्पां सम्पत्तिं च स्वाह्लादाय कन्यायाः सुखाय च अदीयत किन्तु समागच्छति काले तद्दानं कन्यायाः मूल्यस्वरूपं संजातम् । मध्यकाले सामन्ताः, धनिकाः, धनधान्योपेताः जनाः स्वकन्यायाः विवाहे अपारधनधान्यं सुखसाधनानि च प्रायच्छन् । ततः परं इदं दानं परम्परारूपेण सर्वेषु जनेषु प्राचलत् । अतो हि वरपक्षः कन्यापक्षात् श्रेयान् गणितः, कन्यापक्षस्तु दयनीयः अकिंचनः कष्ट-भाक् संजातः । ततः परं वरपक्षतः कन्यां स्वीकर्तुं विविधाः पृच्छाः समारब्धाः, परि-णामतः निर्धनानां जनकानां कन्याः बहुकालं यदा कदा आजीवनम् अविवाहिताः अतिष्ठन्

अस्याः परम्परायाः मूले सन्ति अनेकानि कारणानि । जनकाः स्वात्मजां योग्य-तमाय वराय दातुं स्वोदरम् अपूरयित्वा स्वसुखं शान्तिञ्च परित्यज्य वरपक्षस्य अश्रुत-पूर्वां पैशाचीं क्षुधां शमयितुं यतन्ते । यस्य जनकस्य अनेकाः कन्याः भवन्ति स ताभ्यः सम्यक् पोषणमपि कर्तुं न समर्थः, का कथा तासाम् उद्वाहस्य । एतदतिरिक्तं लोके विवाहसमये स्ववैभवप्रदर्शनस्य यादृशी प्रवृत्तिः प्रचलिता तया सर्वेऽपि शिक्षिताः अशिक्षिताः इयन्तः अभिभूताः यत् यावद् उद्वाहे भूरिशः व्ययः न क्रियते, यावत् तत्र विद्युतदीपानां समीचीनः प्रकाशः न स्यात्, यावत् नृत्यगीतादिकं न भवेत्, तावत् अयमुत्सवः आनन्दमयः न जायते, तावदयं संस्कारः पूर्णः न भवति । अतः एतादृशी लालसा सर्वान् जनकान् सर्वदा सन्तापयति । फलतः इदानीं इयं परम्परा भीषणरूपेण समाजे सन्निविष्टा । कष्टं यत् अल्पीयसा यौतुकेन समं समागता वधू न कुत्रापि समाद्रियते ।

कथमस्याः परम्परायाः विच्छेदो भवेत्, कथं वा वरपक्षस्य पिपासा वितृप्ता जायेत एतत् सर्वं सम्यक् विचिन्तनीयम् । साम्प्रतं मञ्चतः सर्वे आक्रोशं दर्शयन्ति किन्तु स्वात्मजस्य उद्वाहे येन केनचित् व्याजेन कन्यायाः धनमपहरन्ति । एतत् दुःखावहं वस्तुजातं विलोक्यैव प्रोक्तं केनचित् कविना—

सुधांशुरश्मिप्रचयै विनिर्मिता, गुणोत्तमा स्नातकविद्ययावृता ।
सुतातुषारैरिव यौतुकार्थिभिः कुमुद्वतीव व्रजति कश्मलम् ॥

विलोभिनं साग्रह यौतुकार्थिनं विलोकयन्ती पितरं च निर्धनम् ।
सुवर्णवर्णापि वहुश्रमात्मजा शशाद् भीता चटकेव वेपते ॥

वरात् समाकर्ण्य विवाहदक्षिणां स्ववंशमालोक्य च दातुमक्षमम् ।
दहन्ति देहं विसृजन्त्यसून् स्वयं दवानलस्पृष्टलतेव कन्यकाः ॥

अतः अस्याः परम्परायाः उच्छेदाय कतिचित् उपायाः अत्र प्रस्तूयन्ते :—

१ प्रत्येकम् उद्वाहः शासने ज्ञापितः, अंकितश्च भवेत् ।

२ शासन द्वारा गुप्तरूपेण विलोकनीयं यदि कुत्रचिदपि नियमोल्लंघनं जायेत तत्र वरपक्षः दण्डनीयः भवेत् ।

३ महिलानां संघाः संघटिताः भवेयुः यैः यौतुकं विना उद्वाहाः समाधेयाः इति निश्चेतव्यम् ।

४ वराणां परिचयाः समाचारपत्रेषु प्रदेयाः, अस्याभावेऽपि वरपक्षः दण्ड्यः भवेत् ।

५ नैतिकमूल्यानि समाश्रयणीयानि सर्वैः भारतीयैः ।

६ अनेके उद्वाहाः एकस्मिन् मण्डपे भवेयुः ।

७ उद्वाहेषु व्ययभारः निर्धारितः भवेत् ।

———

## २०. भारतीया संस्कृतिः

### "धन्या भारत भूः प्रकामवसुधा प्रत्ना च तत् संस्कृतिः"

विश्वविख्याता, व्यापिका, परमप्राचीना, अन्यतमा, धर्मप्रधाना, श्रेष्ठा च भारतीया संस्कृतिः कस्य न प्रिया । इयं प्राचीनकालात् अद्यावधि भगवती भागीरथी इव अपराः समागताः संस्कृतीः आत्मसात् कुर्वाणा भारतवसुन्धरां पावयति । यदा सुदूरे अतीते अन्ये देशाः संस्कारहीनाः, आचरणविहीनाः दीनाश्चासन् तदापि भारतीया

संस्कृतिः स्वकीये चरमोत्कर्षे विराजमाना लोकहितञ्च कुर्वाणा आसीत्। "वसुधैव कुटुम्बकम्", "सर्वे भवन्तु सुखिनः", "अहिंसा परमो धर्मः" इत्यादीन् सदुपदेशान् लोकोपकारकान् अन्यान् सिद्धान्तान् इयमेव उपदिशन्ती अभासत।

चेतसः संस्करणं यया जायते सैव संस्कृतिः। कस्यचित् समाजस्य सभ्यता तस्य वाह्य' स्वरूपं प्रकटयति, तस्य संस्कृतिः तस्यान्तरं स्वरूपम् इति। वयं किं धारयामः, किं अश्नीमः, कीदृशे गृहे निवसामः इत्यस्माकं सभ्यता किन्तु वयं कमर्चामः, कस्य वा सम्मानं कुर्मः, कीदृशमाचरणं कुर्मः इत्यस्माकं संस्कृतिः। संस्कृतिः लोकस्य मलमपनयति, स्वातन्त्र्यं प्रसारयति, आत्मानञ्च पावयति। भारतीया संस्कृतिः एका अनुपमा संस्कृतिः। अस्यां अन्यासां संस्कृतीनां विविधानि तत्त्वानि समागतानि। इयं वैदिककालात् सततं एकरसं प्रवहन्ती प्रचलति, यद्यपि अस्यां जैनसंस्कृतेः, बौद्धसंस्कृतेः, यवनसंस्कृतेः, आंग्लसंस्कृतेश्च तत्त्वानि विद्यन्ते। आधुनिके युगे अस्यां पाश्चात्त्यसंस्कृतेः भूयान् प्रभावः दरीदृश्यते, तथापि मूलरूपेण भारतीया एव इयं संस्कृतिः अलौकिकी विलसति। वस्तुतः इयं काचिद् विलक्षणा, सारगर्भा, शाश्वती धारा विद्यते या अन्याः सर्वाः आदाय भागीरथीवत् भागीरथीं करोति। अस्यां निम्नलिखितानि वैशिष्ट्यानि विद्यन्ते :—

१. इयमाध्यात्ममूलिका, इयं भारतीयानां महर्षीणामनुभूतानां संस्काराणाम् आधारमाश्रित्य तिष्ठति। इमे संस्काराः अध्यात्ममूलकाः, फलतः भारतीयाः सर्वं कार्यम् आत्मतत्त्वं विचिन्त्य तस्यैव सुखाय, तस्यैव मोक्षाय समाचरन्ति। एतेषां महानुभावानाम् आचारे विचारे सदा इयमेव भावना आयाति यद् तैः अन्यो लोको गन्तव्यः, पुनर्जन्म लप्स्यते, अतः अस्मिन् जन्मनि आत्मनः मुक्तये तैः प्रयतितव्यम्।

२. भारतीयायां संस्कृतौ तपसः, त्यागस्य, दानस्य महान् महिमा वर्तते। अस्यां न जाने कियन्तः त्यागशीलाः, दानवीराः तपस्विनः अजायन्त यैः परार्थं सर्वस्वं स्वकीयं प्रदत्त' येषामनुकरणम् अद्यापि भारतीयैः क्रियते। भारतीयानां अमोघः विश्वासः अस्ति यद् अस्मिन् भूतले प्रदत्त' दानं अपरस्मिन् लोके प्रतिफलं दास्यति, तत् सर्वं पुण्याय भविष्यति अतः निर्धनाय, अकिंचनाय, याचकाय अवश्यं स्वशक्त्यनुसारं दानं प्रदातव्यम्।

३. अस्याः संस्कृतेः सर्वोत्तमं वैशिष्ट्यं मोक्षोन्मुखता वर्तते। अस्याः अनुसारं जनाः आत्मतत्त्वं विचिन्त्य, देहबन्धात् तस्य मुक्तिं वाञ्छन्ति। ते तत् कृते अहर्निशं

यतन्ते । तेषां जीवनस्य चरमं लक्ष्यं मोक्षावाप्तिरेव भवति । यत्र पाश्चात्य-संस्कृतिः ऐहिक सुखानां भोगेषु विनिवद्धा तत्रैव भारतीया संस्कृतिः त्यागे, तपसि च दृढमाश्लिष्टा । इयं भोगसुखपराङ्मुखा । यथा महर्षिणा मनुना प्रोक्तम्—

न जातु कामः कामानामुपभोगेन शाम्यति ।
र्विहषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

अतः जीवनकाले मानवाः भोगेभ्यः विरतिम् अभिलषन्ति । का कथा भोगानां—कर्म कुर्वन्तोऽपि मानवाः भगवता व्यासेन फलेच्छां त्यक्तुं समादिष्टाः । यस्यां संस्कृतौ कर्मफलकामनैव नास्ति कथं तत्र ऐहिकसुखानां भौतिकानां संभोगः भवितुम् अर्हति ।

४. अस्यां संस्कृतौ जीवनं चतुर्षु आश्रमेषु विभक्तं, येषु अन्तिमः सन्यासः, यस्मिन् सर्वस्वत्यागः अपेक्षितः । अतः वैभवादिकस्य न तत्र कापि गणना । याज्ञवल्क्य पत्न्या सुष्ठु भणितं, "नाहं येन अमृतः स्याम् किं तेनाहं कुर्याम्" अतः देहावसानात् प्रागेव मानवः देहाभिमानं सुखञ्च परित्यक्तुं यतते, तत्रैव च निजजीवनस्य साफल्यं मन्यते ।

अस्यां संस्कृतौ तपसोऽपि विपुलं महत्त्वं वर्तते । प्राचीनकाले भारतदेशे स्थाने स्थाने जनाः तपः आचरन् अद्यापि कतिचित् जनाः पर्वतानाम् उपत्यकासु, गुहासु निलीनाः तपः आचरन्ति । तेषां न कापि ईहा । तपस्विजीवनम् एकं असामान्यं जीवनं यस्य कृते अनेके स्पृहयन्ति, किन्तु साम्प्रतं स्वल्पाः जनाः तत्र सफलीभूताः भवन्ति ।

५. भारतीय संस्कृतौ धर्मस्यापि एकं विशिष्टं स्थानं विद्यते । अत्र धर्मः न उपासनार्चनादीनां धार्मिक कृत्यानां वाचकः अपितु कर्त्तव्यस्य वाचकः, प्रतीकः विद्यते । उच्यते केनापि मानवानां कृते, धर्मो हि तेषामधिको विशेषो, धर्मेणहीनाः पशुभिः समानाः । यमाः, नियमाः दमाः अत्र परिपालनीयाः । योगः समाधेयः । आचारः परमो धर्मः, वृत्तं यत्नेन संरक्षेद् वित्तमेति याति च । अक्षीणो वित्ततः क्षीक्षोवृत्तस्तुहतो हतः । इमानि वाक्यानि भारतीयसंस्कृतेः स्वरूपं विनिश्चेतुं समर्थानि । अस्माकं उपनिषद् वाक्यं चिरस्मरणीयम्—

ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम् ॥

———

## २१. अस्माकं महाविद्यालयस्य महोत्सवः

यावान् प्राचीनः विद्यागमः तावानेव उपाधिवितरणमहोत्सवः, भवतु नाम अस्य स्वरूपं स्थले स्थले पृथक् भवेत्। प्राचीनकालात् अद्यावधि अस्य परम्परा विभिन्नेषु देशेषु विविध रूपेण परिपाल्यते। अस्माकं देशेऽपि नगरे नगरे महाविद्यालयेषु इयं प्रचलति। अस्माकं महाविद्यालयेऽपि प्रतिवर्षं दिसम्बरमासे उपाधिवितरणमहोत्सवः सम्पन्नः भवति। अस्मात् दिनात् प्रागेव विद्यालयस्य भवनं सुधया धवलितं क्रियते, सम्पूर्णं क्षेत्रं स्वच्छं क्रियते, तोरणादिकाः विधीयन्ते। अस्मिन् अवसरे महाविद्यालयस्य कार्यकलापं सम्यक्तरत्वेन विधातुं अध्यापकाः, छात्राः, कर्मचारिणश्च स्वे स्वे नियोगे सन्नद्धाः, निष्ठया निरताश्च दृश्यन्ते। सर्वे अन्तिमदिवसस्य कार्यक्रमं सफलीकर्तुं मनोयोगेन चेष्टन्ते।

अस्माकं महाविद्यालये एतदर्थं प्रथमं तावत् एकं विशिष्टं मण्डपं कार्यते। महाविद्यालयस्य सुरम्ये सुसज्जिते प्राङ्गणे सुविशाले मण्डपे सभायाः समायोजनं विधीयते। अस्यां सभायां न केवलं महाविद्यालयस्य अपि तु तदितरे जनाः आयान्ति। अयं उत्सवः प्रायः छात्राणां परीक्षानन्तरं सम्पन्नः भवति अतः उत्सवात् पूर्वं तेषा ज्ञानक्रीडनयोः प्रतियोगिताः अपि आयोज्यन्ते। आसु प्रतियोगितासु समीपवर्तिनां विद्यालयानां छात्रा अपि प्रतियोगिनः भवन्ति। इमाः प्रतियोगिताः कबड्डी-करकन्दुकः-पादकन्दुक क्रीडासु, उच्चैः कूर्दने, आयाम कूर्दने, धावने, गोलादिप्रक्षेपेषु भवन्ति। ज्ञानप्रतियोगितासु छात्राणां सहयोगः, तेषां स्पर्धाभावः, परिश्रमः, अभ्यासः, दलगतव्यक्तिगतक्षमतायाः प्रदर्शनं जायते। वस्तुतः विद्याध्ययनस्य एकं विशिष्टं अङ्गं इदमपि भवति। एवं छात्राणां सर्वतो विकासः जायते। स्वविद्यालयस्य कृते त्यागभावोऽपि जायते।

अस्य सत्रस्योत्सवे प्रदेशस्य शिक्षामन्त्रिणः दीक्षांतं भाषणं कर्तुं आमन्त्रिताः आसन्। अतो हि अस्योत्सवस्य आयोजने महान्तः समारम्भाः कारिताः। अस्यायोजनं पूर्वनिश्चिते मण्डपे सायंकाले चतुर्वादने जातम्। अतः चतुर्वादनतः प्रागेव अतिथयः, अध्यापकाः छात्राश्च, सभामण्डपमलंचक्रुः। शिक्षामन्त्रिणां स्वागताय तत्रासीत् सन्नद्धं स्वयंसेवक दलम्। तथैव मन्त्रिमहोदयाः तत्र समागताः वादकमण्डलेन स्वयंसेवकदलेन तेषां अभिनन्दनं विहितं। प्रधानाचार्यः तेभ्यः पुष्पमालाः समर्पयत्। पीठासीने मन्त्रिमहोदये सभामण्डपे हर्षध्वनिः संजातः। कार्यक्रमः बालिकानां सुमधुरेण स्वरेण सरस्वती वन्दनया समारब्धः। तदनन्तरं महाविद्यालयस्य प्रधानाचार्यः

मुख्यातिथेः अभिनन्दनम् अन्येषां समागतानां अतिथीनां स्वागतमकरोत् । ततः परं विद्यालयस्य मन्त्रिमहोदयेन विद्यालयस्य वार्षिकं विवरणं प्रस्तुतं । अस्मिन् विवरणे विद्यालयस्य प्रगतिः, छात्राणां समुपलब्धयः, अध्यापकानां, कर्मचारिणां च समस्यानां विवरणं प्रदत्तम् । अतः परं शिक्षामन्त्रि महोदयाः स्वाशिषप्रदानाय प्रार्थिताः ।

एतदनन्तरं शिक्षामन्त्रि महोदयानां भाषणं समारब्धम् । तेनोक्तं, "सर्वविदित-मेतत् यत् गीर्वाणवाणी ज्येष्ठा, श्रेष्ठा, प्राचीना समृद्धा च भाषा, सुनिश्चितं यदस्याः भाषायाः साहित्यं अमूल्यानां रत्नानां भाण्डारः, एतदपि नाविदितं कस्यचित् यद्स्यामेव भारतीया संस्कृतिः उपनिबद्धा । परं कष्टं यत् साम्प्रतं इयं भाषा समाजे न व्यवह्रियते । अस्याः स्नातकाः न तथा समाद्रियन्ते यथा अन्यासां भाषाणां स्नातकाः समादृताः भवन्ति । एवं मन्त्रिमहोदयैः संस्कृतस्य महत्त्वं प्रतिपादितं तस्य प्रसाराय प्रचाराय च यत्नाः प्रकीर्तिताः, शासनस्य साहाय्यप्रदानाय अपि तैः समाश्वासनं प्रदत्तम् । अतः तेषां सारपूर्णं, प्रेरकं भाषणमाकर्ण्य सर्वेजनाः तारस्वरेण करतलध्वनिभिः तेषामभि-नन्दनं अकुर्वन् । अचिरं समस्तं सभामण्डपं हर्षोल्लासेन आपूरितं जातम् । एतदनन्तरं तैः उपाधिवितरणं कृतम्, तैः पुरस्कार विजेतृभ्यः पुरस्काराः अपि प्रदत्ताः ।

अन्ते मम महाविद्यालयस्य अध्यक्षः महापौरः शिक्षामन्त्रिमहोदयेभ्यः विशेष-रूपेण अन्येभ्यो विद्वद्भ्यः समागतेभ्यश्च धन्यवादाञ्जलीन् व्यतरत् । उत्सवस्य इयं परिपाटी अतिसुखप्रदा, लाभप्रदा प्रेरका च भवति । साम्प्रतं विद्यालयाः दलगत–राजनीतिकेन्द्राणि संजातानि । अतः तादृशी विद्यायाः पूता परम्परा न दरीदृश्यते यादृशी प्राचीनकाले आसीत् । अस्माकं नेतृजनाः विचारयन्तु तावत् कथं सरस्वती–समुपासकानां, अध्येतृणां वातावरणं विशुद्धं जायेत । केवलं एभिः सुसज्जितैः मण्डपैः विद्युतदीपै रेवज्ञानज्योतिः नायास्यति । ज्ञानाय सत्य निष्ठा अपेक्ष्यते । सैव वरणीया ।

—०—०—

## २२. काचिद् मनोरमा यात्रा (शिमलानगरस्य)

पर्यटनं सदा सुखदायकं न भवति तथापि जनाः इतस्ततः पर्यटन्ति । इत्थं सामान्या धारणा लोकानां यत् पर्वतीयानि अञ्चलानि अतीव रमणीयानि भवन्ति अतो हि ते ग्रीष्मे पर्वतेभ्यः धावन्ति । ग्रीष्मे तेषां यात्रा सुखदात्री भवति किन्तु शीतकाले सैव कीदृशी कष्टप्रदा जायते नैतदनुमातुं शक्यते । एकदाहं कार्यवशात् शीततौ माघमासे शिमलानगरम् अगच्छम् एव । शीतकाले पर्वतानां यात्रायाः कष्टानि अनु–

भूय एव ज्ञातुं शक्यन्ते न तु कल्पनया। पर्वतेष्वपि शिमलानगरस्य यात्रा सविशेषं भयावहा जायते यतः नगरमिदं शीतकाले पूर्णतया हिमाच्छादितं भवति। तदानीन्तनस्य शीतस्य अनुमानं तम् अविलोक्य तथैव दुष्करं यथा युद्धभूमेः वर्णनम्। तथाहि पर्यटकः कदा कुत्र पर्वतखण्डेषु पतिष्यति, कुत्र स शैत्याभिहतः भविष्यति, कुत्र हिमे निमज्जिष्यति एतत्सर्वं महत्त्वपूर्णम् विचारणीयं च। यद्यपि विज्ञानवलेन अनेकानि सुखसाधनानि जगति समायोजितानि तथापि प्रकृतिः अद्यावधि अजेया। सा इदानीमपि न पार्यते नियन्तुम्। भवतु नाम कष्टपरम्परा। शिमलानगरं शीतकालेऽपि दर्शनीयं, अत्र प्रकृतेः अनुपमायाः शोभायाः भाण्डारः विराजते, प्रकृतिः उद्घोषयति नाहं मानवाधीना। न कोऽपि मदीयां शोभाम् अतिशयितुं समर्थः।

कालकातः शिमलां प्रति रेलयानमार्गः ८९ कि० मीटर परिमितोऽस्ति। यद्यपि तत्र बसयान द्वारा यात्रामार्गः न्यूनतरः तथापि प्रायः जनाः रेलयानेन यात्रां कुर्वन्ति। पर्वतेषु यद्यानं चलति तत् क्रीडनकवत् भवति। पर्वतीयः मार्गः वक्रः वर्तुलाकारश्च भवति। अतः पर्वतमार्गेषु रेलयानं सर्पवत् सरति। यत्र कुत्रापि मार्गावरोधः आसीत् तत्र पर्वतान् विभिद्य शतशः सुरङ्गाः विनिर्मिताः, अतः रेलयानं तेषाम् अभ्यन्तरेषु प्रविशति। यानाभ्यन्तरे तिष्ठन् पर्यटकः न बहिः द्रष्टुं शक्नोति। दिनेऽपि तदा रात्रिः समागता इति प्रतिभाति। यदा कदा स भयभीतः जायते, स चिन्तयति चेत् यानस्य गतिः अवरुद्धा जायेत, चेत् तस्य प्रचलनं न भवेत् तदा किं भविष्यति। येन केन प्रकारेण सुरङ्गानां साहाय्येन वाष्पगन्त्री सरलतया पर्वतशिखरे उपगच्छति। अत्र सुरङ्गाः केवलं तावत्यः विस्तृताः यत् रेलयानमेव केवलं सरितुं पारयति तत् उभयतः न कोऽपि जनः स्थातुं शक्नोति। यदा रेलयानं सुरङ्गात् बहिरागच्छति तस्य सम्मुखं दृश्यं चलचित्रांकितम् इव भवति। सर्वत्र सर्वाणि वस्तूनि श्वेतवस्त्रावृतानि इव आभान्ति।

अस्मिन् मार्गे धर्मपुरात् प्रागेव" सरलवृक्षाणाम् वनानि समक्षम् आयान्ति। अत्रत्यानां पर्वतानां शोभा देवदारुसरलपादपानां प्राधान्येन भवति। अत्रैव सोलननामकम् एकं नगरं यत्र अनेके पर्यटकाः पर्यटितुं गच्छन्ति। इदमेकं व्यापारिकं केन्द्रम्। यदा रेलयानं सोलनतः कुण्डाघाटं प्रति चलति तदानेके विद्युत् दीपकाः उडुगणवत् प्रतीयन्ते। रेलयानं यदा अधस्तात् उच्चैः गच्छति तदा एतत् प्रतिभाति यदेतत् नक्षत्राणि स्प्रष्टुं वाञ्छति। यथा जनाः उच्चैः गच्छन्तः शक्तिम् आदधति तथैव रेलयानमपि शक्तिमादाय खुड़ खुड् इति शब्दं कुर्वत् उच्चैः धावति। मार्गेषु मेषपालकाः, कृषकाः, भारं वहन्त्यः विविधवर्णोपेताः ललनाः दृश्यन्ते। अत्रैव पर्वताग्रेषु प्रवहन्ती

वारिधारा पर्यटकानां मनांसि मोहयति । कीदृशं स्वच्छं, शीतं, वेगपूर्णं जलं तत्र भवतीति न शक्यते वक्तुम् । यदा रेलयानं कियत् दूरं चलति अनेकानि लघूनि विशालानि च क्षेत्राणि परिलक्ष्यन्ते । तत्र इयन्ति दृश्यानि सम्मुखम् आयान्ति यान्ति च यत् तेषां राजिः न कदापि छिन्ना जायते ।

आगते शिमलानगरे पर्यटकस्य सर्वं कष्टं विलीनं जायते । अत्र घनीभूतं हरितत्वं, हिमस्य श्वेतत्वं यात्रिणां मनः मोहयति । दूरात् शिमला पर्वतस्य क्रोडे स्वपिति इति प्रतिभाति । अत्रत्याः पण्यशालाः विविधाभिः सुखसाधनसामग्रीभिः आपूरिताः । अत्रैव मालमार्गः अति विस्तीर्णः सुविशालश्च । "रिज" इत्याख्यस्यस्थले महार्घैः वस्त्रैरुपेताः यात्रिणः आयान्ति, आतपाय स्पृहयन्ति, किन्तु कष्टं यः सूर्यः मरुभूमौ प्रचण्डतां धारयति सोऽत्र रुग्णः, पीतः, निर्बलश्च प्रतीयते । अहो कीदृशः महिमा भगवतः येन एतादृशं विचित्रं स्वकीयं विश्वं विरचितम् । अत्र प्रतिवर्षं प्रायः लक्षपरिमिताः यात्रिणः आयान्ति, प्रकृतिक्रोडे सुखेन विहरन्ति ।

अत्र मुख्यापणे यथा धनिकानां वाहुल्यं तथैव अस्य पार्श्वभूमौ निर्धनाः, नग्नाः, अर्धनग्नाः, शीताक्रान्ताः जनाः दृष्टिपथम् आयान्ति । धनिकानां सर्वं सुखं, सर्वं वैभवं एतेषां निर्धनानां परिश्रमेणैव सुलभम् । इमे निर्धनाः स्वजीविकायै कठिनं दुःसहं शीतं सहन्ते, वर्णनातीतं श्रममाचरन्ति ।

अत्रागत्य गगनभेदिनां पर्वतानां हिमाच्छादितानि शृंगाणि, तेषां श्वेतत्वं विलोक्य पर्यटकः सहसा विचारयति इदं श्वेतत्वं न कस्मिन्नपि मानवीये पदार्थे सम्भाव्यते, नेदं दुग्धस्य, नेदं फेनस्य, नेदं रजतस्य, नेदं चन्द्रिकायाः, नेदं सूर्यस्य तथापि श्वेतत्वमिदं, इदम् अलौकिकं, दिव्यं, वस्तुतः यदा एतादृशं समुज्ज्वलं जलं भगवत्याः भागीरथ्याः प्रारम्भे प्रचलति तदैव समभूमौ आगत्य मलिनतां न गृह्णाति । अत्र हिमः दुग्धवत् धवः सर्वत्र प्रसरति । सौधानामुपरि अयं सुधालेपनम् इव आभाति । रात्रौ अयं पुष्पाणि वत् वर्षति, प्रातःकाले वस्त्रवत् भूमिम् आच्छादयति । अयं पर्यटकान् बारंबारं आह्वयति चात्मानं विलोकयितुं विवशान् करोति । वस्तुतः रात्रौ अस्य नगरस्य शोभां विलोक्य एतत् प्रतीयते यदमरावती स्वकीयाम् आभां प्रदर्शयितुम् एव भूमौ समायाता । अत्रत्यानां ज्योतिष्मन्तो दीपाः कथयन्ति, वयं क्षणस्थायिनः । आगच्छन्तु, विलोकयन्तु अत्र नैव बहुकालं स्थास्यामः ।

अन्ततः इयं यात्रा कियती सुखकरी आसीत्, यत् तत्रागतानि व्यवधानानि विस्मृतानि । शिमला नगरं विलोकनीयं, तत्रत्या प्राकृतिकाभा प्रशंसनीया, तत्रत्ये शैत्येऽपि सुखम्, एतदेव विचित्रम् । न विस्मरणीया यात्रेयम् ।

## २३. मम प्रियं पुस्तकम्

जगतीतलेऽस्मिन् लोकानां विभिन्नाः रुचयः, विभिन्नाः परिस्थितयः, विभिन्नानि च तेषां मनोरंजनसाधनानि किन्तु सुनिश्चितमेतत् यत् सर्वे आमोदाय स्पृहयन्ति, सर्वे सुखमभिलषन्ति, सर्वे ऐहिकं पारलौकिकञ्च आनन्दं कामयन्ते । एतदर्थं केचन जनाः चित्रपटं विलोकयन्ति, केचन अभिनयं पश्यन्ति, केचन देश-देशान्तरं पर्यटन्ति केचन तपः आचरन्ति, केचन गृहे स्थिता एव पुस्तकानि अधीत्य आनन्दं लभन्ते । अध्ययनात् वस्तुतः आनन्दावाप्तिः तु सर्वसुलभा किन्तु पुस्तकानामध्ययनेऽपि एका विचित्रा कथा । तत्र विद्यन्ते विविधानि पुस्तकानि एषु कानिचिद् उपादेयानि, कानिचिद् मनोरंजकानि, कानिचिद् धार्मिकाणि वा सामाजिकानि । साम्प्रतं अस्मिन् प्रगतिशीले युगे न कोऽपि सर्वाणि पुस्तकानि अध्येतुं समर्थः, न च सर्वाणि पुस्तकानि अध्येतव्यानि भवन्ति । अतः सर्वेजनाः स्वरुच्यनुसारं सम्यक् विचार्य पुस्तकानाम् अध्ययनं कुर्वन्ति । यादृशे ग्रंथे भाषालालित्यं, अविरलरसप्रवाहः, विविधाः परिपक्वाः अनुभूतयः, प्रकृतिवर्णनं, सजीवं चरित्रचित्रणं स तु अध्येतव्य एव ।

अनया दृष्ट्या मदीया अभिरुचिः वाल्मीकि-रामायणे समापतिता । महर्षिः वाल्मीकिः आदिकविः स्वीक्रियते । तेन भगवतः मर्यादापुरुषोत्तमस्य रामस्य उदात्तं मंगलमयञ्च चरितमाश्रित्य यादृशं रुचिकरं सारगर्भं, सुविशालं पवित्रं, भावमयञ्च काव्यं विरचितं न तादृशम् अन्यत्र उपलब्धुं शक्यते । महर्षेः वाल्मीकेः अलौकिकी प्रतिभा आसीत् । ब्रह्मणा प्रेरितेन तेन क्रौञ्चवधमवलोक्य सहसा न्यगादि—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।

अनन्तरं नारदद्वारा निर्दिष्टेन रूपेण तेन यादृशं व्यापकम् अलौकिकञ्च काव्यं प्रणीतं, यादृशं समुज्ज्वलं, मनोहारि, स्वाभाविकञ्च वर्णनं विहितं न तादृशं अन्यासां भाषाणां साहित्ये वर्तते । इदमेव काव्यं रामायणम् इति ख्यातम् ।

रामायणे न केवलं रामचरितं अपितु अनेन व्यपदेशेन जनानां पारस्परिकः व्यवहारः सम्यक्तरत्वेन प्रदर्शितः । कीदृशः पिता, कीदृशः पुत्रः, कीदृशः भ्राता, कीदृशी च माता भवेत् इति सर्वम् एकाम् साधारणीं कथामवलम्ब्य महर्षिणा वाल्मीकिना अस्मिन् काव्ये प्रकटितम् ।

अस्मात् ग्रंथात् प्रेरणामादाय जनाः स्वीकीयं जीवनं मङ्गलमयं शान्तिमयञ्च विधातुं शक्नुवन्ति । अस्य ग्रंथस्य अध्ययने भावा याः तादृशः प्रवाहः समुपलभ्यते यत्

पाठकः वारमेकम् आरम्य न कदापि तत् त्यक्तुम् अभिलषति । तत्र कीदृशानि रसभाव-पूर्णानि वर्णनानि, कीदृशानि प्रकृतिचित्राणि, कीदृशानि अलौकिकानि चरितानि, युद्धवर्णनादीनि उपनिबद्धानि एतत् नैव शक्यते वक्तुम् । तथाहि वर्षावर्णनं पठिव्यम्—

क्वचित् प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित् क्वचित् पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥१॥

जाताः वनान्ताः शिखिसम्प्रनृत्ता जाताः कदम्बाः सकदम्बशाखाः ।
जाता वृषा गोषु समानकामा जाता मही सस्यवनाभिरामा ॥२॥

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा बनान्ताः प्रिया विहीनाः शिखिनः प्लवंगाः ॥३॥

धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥४॥

क्वचित् प्रगीता इव षट्पदौघः क्वचित् प्रनत्ता इव नीलकण्ठैः ।
क्वचित् प्रनत्ता इव वारणेन्द्रैः विभान्त्यनेकाश्रयिणो वनान्ताः ॥५॥

क्वचित् प्रनत्तैः क्वचिदुन्मदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
व्यालम्बवर्हाभरणै मंयूरैर्वनेषु संगीतमिव प्रवृत्तम् ॥६॥

स्वनैर्घनानां प्लवगाः प्रबुद्धाः विहाय निद्रां चिरसंनिरुद्धाम् ।
अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति ॥७॥

नीलेषु नीलाः प्रविभान्ति सक्ताः मेघेषु मेघाः नववारिपूर्णाः ।
दवाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमूलाः ॥८॥

मेघाः समुद्भूतसमुद्रनादा महाजलौघैर्गगनावलम्बाः ।
नदीस्तटाकानि सरांसिवापीं महीं च कृत्स्नामपवाहयन्ति ॥९॥

नरैर्नरेन्द्रा इव पर्वतेन्द्रा सुरेन्द्रदत्तैः पवनोपनीतैः ।
घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥१०॥

शैलोपलप्रस्खलमानवेगाः शैलोत्तमानां विपुलाः प्रयाताः ।
गुहासु सन्नादित बर्हिणासु हारा विकीर्यन्त इवाविभान्ति ॥११॥

रामायणे किष्किंधाकाण्डे २८ तमः सर्गः

## चरित्र चित्रणम्

रामस्य उक्तिः इदं सम्यक् प्रतिपादयति । सः मातरं कैकेयीं प्रति कथयति—

अहो धिङ् नार्हसे देवि वक्तुं मामीदृशंवचः ।
अहं हि वचनाद् राज्ञः पतेयमपि पावके ॥
भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे ।
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ॥
तद् ब्रूहि वचनं देवि राज्ञो यदभिकांक्षितम् ।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥

आसु पंक्तिषु रामस्य पितृभक्तिः, तस्य त्यागः, दृढता च पारिस्फुरन्ति । रामं प्रति दशरथस्य स्नेहोऽपि विवेचनीय एव —तथाहि—

यदा विश्वामित्रः रामं नेतुम् आगतः तदा दशरथेन उक्तम्—

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ॥

ऊनषोडश वर्षो मे रामोराजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥
इयमक्षौहिणी सेना यस्याहं पतिरीश्वरः ।
अनया सह गत्वाहं योद्धाहं तैः निशाचरैः ॥
इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्र विशारदः ।
योग्यारक्षोगणैः योद्धुं न रामं नेतुमर्हसि ॥
अहमेव धनुष्पाणिः गोप्तासमरमूर्धनि ।
यावत् प्राणान् धरिष्यामि तावत् योत्स्ये निशाचरैः ॥

रावणस्य चरित्रं, तस्य दम्भमपि वाल्मीकिना सम्यक् प्रतिपादितम् । यथा—

अस्मिन् मुहूर्ते गत्वैको निवर्तयिष्यामि वानरान् ।
प्रविष्टान् सागरं भीममम्बरं वा रसातलम् ॥
सर्वे भवन्तस्तिष्ठन्तु महाराजेन संगता ।
अहमेको हनिष्यामि राघवं सहलक्ष्मणम् ॥
एकोऽहंभक्षयिष्यामि तां सर्वां हरिवाहिनीम् ।
स्वस्थाः क्रीडन्तु निश्चिन्ताः पिबन्तु मधुवारुणम् ॥
अहमेको वधिष्यामि सुग्रीवं सहलक्ष्मणं,
साङ्गदं च हनूमन्तं सर्वांश्चैवान्न वानरान् ॥

**अनुपमाः अनुभूतयः**

सुलभाः पुरुषाः राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ।।

× × × ×

शोकस्य च किल कालेन गच्छता ह्यपगच्छति ।
मम चापश्यतः कान्तामहन्यहनिवर्धते ।
न मे दुःखं प्रिया दूरे, न मे दुःखं हृतेति च ।
एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ।।
वाहि वात यतः कान्ता तां स्पृष्ट्वा मां स्पृश ।
त्वयि मे गात्र संस्पर्शश्चन्द्रे दृष्टि समागमः ।।

एवम् अस्मिन् काव्ये रामस्य जन्मतः आरभ्य समस्तं जीवनं प्रदर्शितं । पदे पदे महर्षिणा वाल्मीकिना रामस्य प्रशंसा कृता, तथापि तेन रामः ईश्वररूपेण नाराधितः रामः सर्वंगुणसम्पन्नः, परहितेरतः, सत्यनिष्ठः, बलवान्, उदारचरितः, महापुरुषः इति अंकितः । अस्मिन् काव्ये महर्षिणा वाल्मीकिना रामस्य जीवनं विशदतया वर्णितम् । केन रूपेण रामेण शास्त्रं, शस्त्रं चाधिगम्य राक्षसानां वधः अकारि, केन रूपेण धनुर्भंगानन्तरं तस्य उद्वाहः जातः, कथं स वनं गतः, यत्र तेन रावणसदृशः अमोघ-बलसम्पन्नः शत्रुः पराजितः, केनरूपेण रामेण मुनयः त्राताः, राक्षसानां विनाशं विधाय लोके सत्यस्य महिमा प्रतिष्ठापितः एतत् सर्वं सजीवं रामायणे वर्णितम् । अस्मिन् ग्रंथे चतुर्विंशतिः श्वोकाः सन्ति । काव्यमिदं प्रसादगुणोपेतं मनोमोहकं शिक्षा-प्रदं चास्ति । रामचरितस्य व्यपदेशेन अस्मिन् विभिन्नानि शास्त्राणि सर्वजनसुल-भानि विहितानि ।

अतः एतादृशं लोकोपकारकं, सर्वहितसाधकं मनोरमं च काव्यं कस्य सहृदयस्य मानसं न मोदते, कमिदं नाह्लादयति । रामायणे वस्तुतः तत्सर्वमेवास्ति यत् कस्मादपि श्रेष्ठग्रंथात् अपेक्षितं भवति । अस्मिन् काव्ये न केवलं रामस्य इतिवृत्तं वर्तते अपितु कल्पनानां प्राचुर्यं, भावानामुदात्तता, प्रबन्धपाटवं, भाषासौन्दर्यादिकं सर्वमस्ति ।

अतो हि काव्यमिदं लोकप्रियं सिद्धिदायकञ्च । पठितव्यम् इदम् इत्येव मदीया अभिरुचिः, इत्येवमभ्यर्थना ।

०—०

## २४. नहि सत्यात् परोधर्मः

जन्माद्यस्य यतोन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् ।
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥
तेजोवारिमृदां यथाविनिमयो यत्र त्रिसर्गोऽमृषा ।
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परंधीमहि ॥

महामुनिना भगवता व्यासेन सत्यम् ईश्वररूपेण पूजितम् । वस्तुतः सतेहितम् सत्यम् । यत् किमपि शाश्वतं, अपरिवर्तनशीलं, सत्स्वरूपं तदेव सत्यम् । महर्षिणा पतञ्जलिना स्वकीये योगे "सत्यं यथार्थे वाङ्मनसी" इति प्रतिपादितम् । अर्थात् मनसा यत् विचार्यते, तदेव चेत् वाण्या निगद्यते, तत् सत्यम् । मनुना महाभागेन मानवधर्मे धर्मस्य दश लक्षणानि प्रकीर्तितानि, तत्रापि सत्यम् धर्मस्य एकमङ्गम् इति निरूपितम् ।

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

अस्माकं व्यवहारे यथा दृष्टं, यथाश्रुतं, यथा वा कृतं तेनैव रूपेण चेत् तस्य प्रतिपादनं क्रियते तदापि तत् सत्यम् इति उच्यते । संक्षेपेण वक्तुं शक्यते यत् सर्वेषु, देशेषु, सर्वेषु कालेषु, सर्वेषु जनेषु, धर्मेषु च सत्यस्य स्वरूपं प्रतिष्ठापितं वर्तते । सर्वत्र सत्यस्य महिमा गीयते । धर्माणां तु मूलम् सत्यम् एव । धर्मेषु सत्यस्य गौरवम् अक्षुण्णं मन्यते ।

गीतायामपि भगवता श्रीकृष्णेन सत्यं तपःसु गणितम् ।

अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।
स्वाध्यायभ्यासञ्चैव वाङ्मयं तप उच्यते ॥

अन्ततोगत्वा सर्वमेतद् विविच्य एकः स्वाभाविकः प्रश्नः समक्षम् आयाति, अहो कीदृशं तत् सत्यं, कीदृशं बलं सत्यस्य, किं तत्र सत्ये वैचित्र्यं, कथमेतत् सम्भाव्यते, केन रूपेण सत्यबलेन सर्वं सम्पन्नं भवति । कथं योगशास्त्रप्रणेतृभिः महर्षिणा पतञ्जलिनाऽपि मानवानां मानसिक दोषानां शमनाय यमेषु सत्यस्य आकलनं विहितम्, कथं मनुना प्रोक्तम्—

अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति ।

वस्तुतः मानवजीवने विविधाः व्यापाराः, विविधाः आचाराः, विविधाः विचाराः सततं सम्मुखं समायान्ति । केचन इन्द्रियानुकूलाः, केचन इन्द्रियाणां संयमेनैव सम्पाद्यन्ते । सत्यस्य पालनाय इन्द्रियाणां शमनम् अपेक्षितम् । यदा इन्द्रियाणां संयमः जायते, तदैव मानवस्य बुद्धिः विशुद्धा जायते, तदैव इयं विमला संजायते । विमलया बुद्धया यदेव

विधीयते तदेव सत्यं, तदेव शिवं, तदेव सुन्दरम् । यः कोऽपि इन्द्रियाणि संयमितुं न समर्थः स सत्यपालनं कर्तुमपि न पारयति । अतः सत्यपालने दुराचारस्य न कदापि सम्भावना । दुराचारस्य प्रवृत्तिः तदैव सम्भाव्यते यदा पापस्याच्छादनम् असत्याश्रयेण क्रियते । इन्द्रियानुकूलत्वं तदैव सम्भाव्यते यदा पापस्य गूहनं क्रियते । अतः सत्यस्य पालने न कापि दुष्प्रवृत्तिः । यथा दुष्प्रवृत्तिः न जायते तदाकथं निर्बलत्वम् ? वस्तुतः सत्यपालनेन मानवः निर्भयः, निश्छलः, निष्पापः भवति । तस्य तेजः, तस्य वलं, यशश्च वर्धन्ते । सत्यभाषणशीलस्य मनुजस्य वाक् कदाचित् अप्रतिहतशक्त्या सम्पन्ना जायते । स यदेव कथयति असम्भवमपि तत् सम्भवं जायते ।

परं कष्टं यत् सत्यपालनं न सुकरम् । आधुनिके युगे तु एतत् दुष्करमेव । सत्यपालने अनेकानि कष्टानि आयान्ति । ये केऽपि धुरीणाः, मनस्विनः संयमिनः भवन्ति त एव सत्यस्य पालनं कर्तुं पारयन्ति । अतः लोके ये केऽपि सत्यवादिनः, ये सदाचरणशीलाः, ये सत्पथगामिनः सन्ति ते सदा पूज्याः, वन्दनीयाः त एव महाजनाः ।

प्राचीनकालात् अद्यावधि अनेकानि निदर्शनानि संजातानि येषु सत्यपालनेन जनाः कष्टापन्नाः संजाताः । यथा राजा हरिश्चन्द्रः स्वकीयं सर्वस्वं सत्यपालनाय अत्यजत् । तत एव स सत्यहरिश्चन्द्रः जातः । दशरथः स्वान् प्राणान् सत्यपालनाय एव अपर्यत् । आधुनिके युगे महात्मना गान्धिना सत्यपालने अनेके प्रयोगाः कृताः । एकवस्त्रोपेतः स सर्वशक्तिसम्पन्नेभ्यः आंग्लजनेभ्यः न कदापि भीतः । तेन सत्यबलेन आत्मशक्तिः जागरिता । सत्यमवलम्ब्य तेन भारतराष्ट्रस्य हितसाधनं विहितं । अतः स एव भारते पितृतुल्यः पूज्यते ।

सत्यपालनं तु तपसः आचरणं भवति । लोके इदं प्रतिभाति यत् असत्यवादिनः सुखिनः सत्यवादिनश्च कष्टभाजः भवन्ति । परं नैव एतादृशं भाव्यं, एतादृशी भावना न समीचीना । सत्यवादिनां यशः शाश्वतं भवति, अन्ततोगत्वा सदा सत्यस्य विजयो जायते, असत्यस्य पराजयः भवति । कियानपि वलसम्पन्नः, धनसम्पन्नः असत्यगर्ते निपत्य सदा पराजितः जायते । यथा—रावणः, दुर्योधनश्च ।

सत्यपालनाय अहिंसा पालनं परमावश्यकं । एतत् कृते ब्रह्मचर्यपालनमपि अपेक्ष्यते । यः कोऽपि मनसा वाचा कर्मणा अहिंसकः स एव कर्तुं समर्थः सत्यपालनं सत्यपालनम् अभ्यासेनैव आयाति । ऐहिकसुखार्थिनः न कदापि सत्यपालनं कर्तुंक्षमः । अतः सत्यं कथनीयं, सत्यमाचरणीयम् सत्यं मननीयम् । सुष्ठु उक्तम्

**नहि सत्यात् परोधर्मः**

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैः दानशूरैश्च सप्तभिर्धार्यतेमही ॥

## २५. जलबिन्दुनिपातेन क्रमशः पूर्यते घटः

विशिष्टेयं परम्परा अस्मिन् जगतीतले यत् प्रकृतेः प्रत्येकं कार्यं क्रमेण पूर्णतां याति । जीवः जन्म लभते, शनैः शनैः पुष्टिं प्राप्नोति, कालान्तरे वर्धते, मानवरूपेण व्यवहरति । एवं लताः, पादपाः अहर्निशं वृद्धिम् उपयान्ति, समये आगते फलान्विताः भवन्ति । सूर्यः प्रातः उदेति, शनैः शनैः ऊर्ध्वं गच्छति, लोकञ्च तापयति, अन्ते अस्तं गच्छति । नदीनां स्रोतसः क्षीणा धारा प्रचलति, शनैः शनैः विशालतां गच्छति, यदा कदा तु इयं भयंकरतामुपैति । पदार्थेषु रसायनक्रिया अपि शनैः शनैः भवति कालान्तरे काष्ठान्यपि प्रस्तराणि जायन्ते । सदा बीजादेव प्ररोहः जायते, अंकुरः प्रस्फुटति, शनैः शनैः समयेन सुविशालः तरुवरः समक्षम् आयाति । किं बहुना अयं हेतुः सार्वभौमः तथापि विद्यायाः अभ्यासे, धनस्योपार्जने, धर्मस्य चाचरणे विशेषरूपेण उपयुक्तः जायते । यथोक्तं केनचित् कविना—

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥

अर्थात् यथा जलबिन्दुनिपातेन घटः पूर्यते तथैव कणं कणं संगृह्य विद्यागमः, धनागमः भवति । बालकाः आरम्भे वर्णज्ञानं कुर्वन्ति, अनन्तरं पारंगताः विद्वांसः जायन्ते । धनार्जनं तु यदा कदा अचिरम् भवति किन्तु विद्यार्जनं न कदापि युगपदेव आगच्छति । अनायासं प्राप्तं धनं अचिरं नश्यत्येव, वारमेकमधिगता विद्या न कदापि नश्यति । यथोक्तं केनचित् कविना—

क्षणशः कणशश्चैव विद्यामर्थंश्च चिन्तयेत् ।
क्षणत्यागे कुतो विद्या कणत्यागे कुतोधनन् ॥

**अपरमपि उक्तम्—**

शनैः पंथाः शनैः कन्थाः शनैः पर्वतलंघनम् । लोके प्रतिदिनं पथिकाः शनैः शनैः गच्छन्तः स्वीयं गन्तव्यं प्राप्नुवन्ति । शनैः शनैः वैज्ञानिकाः चन्द्रतलमगच्छन् । अत्युच्चशिखरेषु आरोहन्, गभीरेषु जलेषु प्राविशन् । अनुदिनं ते प्रकृतिं विजित्य नवीनं कीर्तिमानं स्थापयन्ति । एतद् नाविदितं कस्यचित् विपश्चितः यत् आरम्भे मानवः अत्यन्तम् अविकसितः आसीत् । शनैः शनैः तेन अतुलनीयः अकल्पनीयः परिश्रमः विहितः, तेन साहसेन, धैर्येण च सदा प्रकृतिविजयाय प्रयत्नाः कृताः, भौतिकानां तत्त्वानाम् अध्ययनं कृतं, प्रकृतेः कार्यकलापस्य अनुदिनं सूक्ष्म निरीक्षणं, गहनम्

अध्ययनं कृतं, अतएव अद्य मानवस्य महतीशक्तिः समुत्पन्ना। स सुसभ्यः सुखसाधन-सम्पन्नः यत्र कुत्रापि रोचते तत्रैव विहरति। एवं समाजस्य विकासः शनैः शनैः संजातः। अनेनैव विकासेन समुन्नतः मानवः समस्ते जगति पर्यटितुं समर्थः।

भारतीय स्वातन्त्र्यमपि शनैः शनैः विहितैः प्रयत्नैः अधिगतम्। स्वातन्त्र्यानन्तरं राष्ट्रस्य विकासोऽपि शनैः शनैः जातः। वस्तुतः कस्यापि कार्यस्य पूर्तयेऽसकृत् प्रयत्नः विधेयः, तत्र अभ्यासः कर्त्तव्यः। भगवता श्रीकृष्णेन उक्तम् अर्जुनं प्रति अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते। कलानामभ्यासः शनैः शनैः भवति, अभ्यासेन मानवाः विशालं जलधिं तरन्ति, अभ्यासेनैव गिरिशिखरेषु शीतेषु स्थलेषु हिमेषु संचरणं कुर्वन्ति। अभ्यासेन अश्वानां धावनं, शस्त्राणां चालनं, शास्त्राणामवगाहनम् भवति। महान्तः कवयः शनैः शनैः महाकाव्यानि व्यरचयन्। शनैः शनैः सर्वासु दिक्षु समुन्नतिः जायते। साम्प्रतं समस्तं विश्वं एकं लघु राष्ट्रवत् संजातं, विश्वसम्मेलनानि भवन्ति मानवीय समस्यानाम् अनुदिनं समाधानं अन्वेष्यते—मानवः किं विधास्यति नास्य कुत्रापि आकलनम्—अतः उक्तम् जलबिन्दुनिपातेन—

---

## २६. वैज्ञानिका आविष्काराः वरदानमभिशापो वा

साम्प्रतं वयं गृहे तिष्ठन्तः जगतीतलस्य कस्मिन्नपि भागे जायमानां घटनां क्षणेन जानीमः। वयम् अहर्निशं विद्युत्प्रकाशे तिष्ठामः, वयं कृत्रिमैः इन्धनैः भोजनं पचामः, वयं नित्यं दूरदर्शनेन सर्वं विलोकयामः आकाशवाणीतः गीतानि श्रृणुमः, किं बहुना वयं चन्द्रतले विचरामः। कथमेतत् सर्वं सम्भवं जातम्, एतत् विज्ञानबलेनैव सञ्जातं नात्र कस्यचित् विप्रतिपत्तिः। मानवजीवनस्य विविधेषु क्षेत्रेषु विज्ञानं समायातम्। विज्ञानेन मानवाय अश्रुतपूर्वाणि सुखसाधनानि समायोजितानि। अद्य रिक्शाचालकोऽपि, श्रमिकोऽपि रेडियो यन्त्रमादाय मार्गे गच्छति।

वस्तुतः विविधकर्मप्रपञ्चशीले अस्मिन् विज्ञानयुगे सर्वत्र विज्ञानस्य साम्राज्यं दरीदृश्यते। अद्य चलचित्रम् अस्माकं प्रमुखं मनोरंजन साधनम्। गताः ते व्यवसायिनः ये प्राचीनकाले प्राणिनां व्यक्तिगत सेवां समाचरन्। गतास्ते दिवसाः यदा मानवः सर्वं

स्वहस्ताभ्याम् अकरोत् । गतानि सर्वाणि पूर्वप्रचलितानि साधनानि । इदानीं यन्त्रैः विनिर्मितं वस्त्रं, यन्त्रैः प्रदत्तं पवनं, यन्त्रैः सञ्चारितं जलं वयं प्राप्नुमः । यन्त्रैरस्माकं यातायातं, यन्त्रैः परिवहनं, किं अन्यत्, सकलः कार्यकलापः विविधैः यन्त्रैः परिचाल्यते । एकस्मिन् दिनेऽपि यन्त्राणामभावः अस्माकं कृते दुःखप्रदः । अतः विज्ञानमेव अस्माकं शरणं, विज्ञानमेव अस्माकं मरणम् । अस्माकं लघूनि, लघुतमानि आहोस्वित् महान्ति, महत्तमानि कार्याणि विज्ञानवलेनैव साध्यन्ते । अद्य मानवस्य प्रत्येकस्मिन् क्षेत्रे विज्ञानं समाविष्टं । तस्य शयने, अशने, गमने, वस्त्रे, विहरणे सर्वत्र विज्ञानं विज्ञानमेव । मानवः विज्ञानस्य इदानीं वशंवदो जातः ।

चिकित्साक्षेत्रे तु विज्ञानेन आश्चर्यंकरी प्रगतिः समानीता । विविधाः चिकित्सा-पद्धतयः आविष्कृताः, विशेषरूपेण शल्यचिकित्सायां विज्ञानेन महत् वैशिष्टयं प्रदर्शितम् । मानवस्य शरीरे अद्य अन्यजीवानां अङ्गानि प्रतिरोप्यन्ते । अनुदिनं मृत्योः प्रतिशतं न्यूनातिन्यूनतरं जायते, जनबाहुल्यञ्च वर्धते । विविधानि औषधानि नित्यं निर्मीयन्ते आविष्क्रियन्ते, वितीर्यन्ते । इदानीम् अस्माकं वैज्ञानिकैः महान्तः लाभप्रदाः विद्युत् किरणाः आविष्कृताः । साम्प्रतम् अस्माकं यात्रा पद्भिः नैव । इदानीं तत्र सन्ति वायुयानानि, जल-यानानि, वेगवत्यः गन्त्र्यः, रौकेटयानं, पनडुब्बी इत्याख्यानि तरणयानानि येषां वलेन कुत्र-चिदपि भयंकरीणां नदीतरणं सरलं, दूरस्थितानि स्थानानि समीपस्थानि संजातानि, येषां वलेन प्रचुरभारवहनादिकं कार्यं अनायासेनैव सम्पन्नं जायते । येषां वलेन मानवः गभीरतमस्य महासिन्धोः तले गच्छति, उच्चतमस्य पर्वतस्य शिखरमारोहति । वस्तुतः एभिः यानैः अखिलं जगत् अत्यन्तं लघुत्वं गतम् । गगनमण्डले, भूलोके, पाताले, स्थले, जले, दुरवगाहे सागरे सर्वत्र मानवस्य गतिः विलोक्यते । दूरभाषयन्त्रेण वयं नित्यं दूर-देशैः सह सम्पर्कं विदध्मः । प्रायः आकाशवाण्या विना तारादिकसम्वलैः केवलं किरणानां साहाय्येन देशविदेशानां सम्पर्कः जायते । साम्प्रतं प्राकृतिकग्रहवत् अस्माकं प्रक्षिप्ताः कृत्रिमग्रहाः भूलोकं परितः भ्रमन्ति ।

कृषिक्षेत्रेऽपि वैज्ञानिकैः महती समुन्नतिः अधिगता । कृषेरुत्पादनं वर्धितुं विविधा रसायनपदार्थाः, विविधानि यन्त्राणि आविष्कृतानि । स्वल्पेनैव कालेन कृषौ धान्यानि उत्पाद्यन्ते ।

मुद्रणकलायां यज्जातं तत्तु न वर्णयितुं शक्यते । प्राचीनयुगे पुस्तकानि हस्त-लिखितानि आसन् । अद्यत्वे प्रातः उत्थाय प्रतिदिनं मानवः सर्वप्रथमं समाचारपत्रं पठति । होरावधौ सहस्र संख्याकानि पृष्ठानि मुद्रितानि भवन्ति । अगणिताः ग्रन्थाः इदानीं मुद्रणालयेषु मुद्र्यन्ते । मुद्रणेन न केवलं ग्रंथाः सर्वजनसुलभाः कारिताः अपितु न्यूनतमेन मूल्येन ते समुपलभ्याः ।

किन्तु यद् विज्ञानं अस्माकं कृते सुखप्रदं तदेव अभिशापोऽपि भवति । युद्धस्थले यादृशी प्रगतिः विज्ञानस्य वर्तते तया तु महायुद्धानि स्थगितानि । साम्प्रतम् एता-दृशानि अणु–उद्रजन—कोवाल्टादीनि—बम्बास्त्राणि वैज्ञानिकैः विनिर्मितानि, बैलेस्टिक मिजाइलाख्यानि अस्त्राणि सृष्टानि यद् स्वल्पैः अस्त्रैः सर्वं जगत् भस्मसात् कर्तुं शक्यते । इदानीं युद्धानन्तरं न विजेतुः न पराजितस्य चिह्नं स्थास्यति । अद्य तादृ-शानि हाहाकाराणि यन्त्राणि विद्यन्ते यैः सर्वं वैभवं, सर्वं भौतिकं जगत् क्षणेनैव विना-शयितुं शक्यते । अतः विज्ञानस्य सदुपयोगः भवेत् चेत् तदैव मानवकल्याणः भविष्यति ।

—० ०—

## २७. मद्यनिषेधः

एका प्रसिद्धा कथा अस्ति । कदाचित् शुद्धोदनस्य आत्मजः सिद्धार्थः भ्रमणार्थम् उद्यानं गतः । मार्गे गच्छतः तस्य दृष्टिपथे कोऽपि आतुरः समायातः । तस्य वेदनां विज्ञाय सिद्धार्थः भ्रमणात् व्यरमत गृहं च प्रत्यावर्तत । अपरस्मिन् अहनि भ्रमणाय गच्छता सिद्धार्थेन एकः क्षीणकायः वृद्धः दृष्टः । तं विलोक्य स पुनः प्रतिनिवृत्तः । एवं तृतीयेऽहनि शवं चतुर्थे च सन्यासिनं दृष्ट्वा सिद्धार्थः स्वराज्यं वैभवञ्च विहाय वनं गतः । आधुनिके युगे तत्र प्रतिदिनं लुण्ठनं जायते, स्तेयं भवति, मद्यपानं भवति, नारीणां सम्मानः बलात् अपह्रियते किन्तु न कोऽपि वैराग्यं भजते । अद्यत्वे मद्यपाः महता परिश्रमेण अर्जितं स्वकीयं धनं विनाश्य कस्मिंश्चिदपि मलिने स्थले अथवा नाल्यां शोचनीयाम् अवस्थां गच्छन्ति । तेषां कुटुम्बिनः धनाभावे बुभुक्षिताः नग्नाश्च तिष्ठन्ति । ते मार्गे गच्छन्तः पथिकान् अपशब्दैरभिनन्दन्ति । ते निजं क्षणिकम् आनन्दं न परित्यजन्ति । न च कश्चिदपि तान् वारयितुं समर्थः । एतेषां कुमार्गगामिनां दुर-वस्थां विलोक्यापि न कोऽपि अस्याः निराकरणं करोति न च कोऽपि वैराग्यं भजते ।

परमप्रमोदविषयः यद् भारतः भूः सत्पुरुषेभ्यः न कदापि रिक्ता आसीत्। अत्र जाताः अनेके वीराः, तपस्विनः, त्यागिनः देशभक्ताश्च। अद्यापि सन्ति अस्माकं देशे कार्यकुशलाः, प्रशासकाः निष्ठावन्तश्च जनाः। तथाहि अस्माकं प्रधानमन्त्रिणा भारतस्य इमं कलङ्कम् प्रमाष्टुं दृढः संकल्पः कृतः। तेन निर्णयः विहितः यदनुसारं १।४।७८ इति दिनात् मद्यपानं वर्जितम्। प्रारम्भे एतदर्थं शासनेन कतिपयेयु स्थलेषु एव निषेधाज्ञा प्रसारिता। अत्र विचारणीयं किमिदं समुचितं वा अनुचितं जातम्।

अस्मिन् विषये मद्यपः श्रमिकः कथयति, "सम्पूर्णं दिनं यावत् घोरं परिश्रमं विधाय चेत् सायमहं स्वीयेन क्षणिकेनानंदेन तं विस्मरामि तत्र का हानिः। नाहं चौरः, नाहं तस्करः, नाहं लुण्ठकः, अहं स्वीयं धनं स्वेच्छया प्रयुनज्मि। अपरमपि विचारणीयं चेत् कश्चित् सभ्यः वारुणीं पिबति स सभ्यः तिष्ठति, चेत् सांसदः पिबति स महाजनः विनोदं करोति, चेद् न्यायाधीशः पिबति स न्याय्यात् उपरि वर्तते, सदा न्यायं विदधाति चेत् तान्त्रिकः पिबति स धर्मम् आचरति। एषु न कोऽपि अपराधं करोति तदा कोऽपराधः मदीयः, केवलं निर्धनत्वम्। सोऽग्रे कथयति-- मया ज्ञायते देवा अपि पिबन्ति, तेषां पानं सोमरसः, मया ज्ञायते समुद्रमन्थने प्राप्तेषु रत्नेषु वारुणी अपि आसीत्। कस्मिन् युगे, कस्मिन् देशे न पीता सुरा। सुरापानेन सुरत्वम् आयाति। धनिकाश्चेत् एतादृशाः भाग्यवन्तः यत् ते सुरां निर्विघ्नं पिबन्ति, कथन्नाहं स्वीयां दीनदुःखनिवारिणीं देशजां सुधां पिबानि। तपस्विनां ब्रह्मानन्दः समाधौ भवेत्, अस्माकं तु अस्यामेव। एषः मदीयः अधिकारः, अहं स्वीयं अभिलषितं वस्तु पातुं समर्थः, कः मां वारयितुमर्हति।

परं तत्रास्ति द्वितीयोऽपि पक्षः। मद्यनिषेधस्य पक्षपातिनः कथयन्ति— श्रमिकस्य स्वकीयायाम् आजीविकायां तस्य कुटुम्बिनाम् अंशः वर्तते, श्रमिकः स्वांशं नाशयेत् किन्तु स्वात्मजस्य, जायायाः, अंशं नाशयितुं नाधिकृतः। एतदतिरिक्तं केवलं सुरापानमेव आनन्दं न प्रयच्छति। आधुनिके युगे सन्ति तत्र अनेकानि रुचिकराणि मनोरञ्जनसाधनानि। मदिरापानेन स्वास्थ्यं नश्यति, बुद्धिः भ्रष्टा जायते, एषा तु राष्ट्रस्य हानिः। मदिरापानेन अन्ये दुर्गुणाः दुर्भावाः कामक्रोधादिजन्याः उपचीयन्ते।

यदा मदिरासेविनां सन्निधौ धनं न भवति ते धनाय पापमाचरन्ति, कलहं कुर्वन्ति, एकं पापम् अन्यानि पापानि अनुसरन्ति । प्राणघातिनः लुण्ठकाः मदिरां पीत्वैव प्राणान् हरन्ति । मदिराम् आसेव्य न कोऽपि कस्यचिदन्यस्य हानिं कर्तुं क्षमः । अतः मद्यनिषेधः परमः आवश्यकीयः । मद्यनिषेधेन देशस्य नूतनं निर्माणं सम्भवम् । ये देशाः शीतप्रधानाः तेषां कृते तु वस्तुतः मदिरायाः उपयोगिता वर्तते । भारतं तु उष्णदेशः अत्र नास्याः कापि आवश्यकता । निर्धने देशे धनस्य सदुपयोगः करणीयः न तु अपव्ययः । मद्यनिषेधः समाश्रयणीयः । श्रीमद्भागवते पुराणेऽपि मद्यपानं त्याज्यं वर्णितं व्यासमहाभागैः ।

तथाहि—

अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ।
द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः ॥

पुनश्च याचमानाय जातरूपमदात्प्रभुः, ततोऽनृतं मदं कामं रजो वैरं च पञ्चमम् ।
अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित्—विशेषतोधर्मशीलो राजा लोकपतिर्गुरुः ॥

अत्र नृपोऽपि वारितः का कथा निर्धनस्य अत। मद्यनिषेधः कर्त्तव्य एव ।

———

# सूत्राणामनुक्रमणिका

—०  ०—